तृतीयन्तु स्मृतं पर्व्व चारण्यकं महत् ॥ १४३ ॥ वनवासं प्रयातेषु पाण्डवेषु महात्मसु। पौरानुगमनञ्चैव धर्मपुत्रस्य धीमतः ॥ १४४ ॥ अन्नौषधीनाञ्च कृते पाण्डवेन महात्मना। द्विजानां भरणार्थञ्च कृतमाराधनं रवेः ॥ १४५ ॥ धौम्योपदेशात्तिग्मांशुप्रसादादन्नसम्भवः। हितञ्च ब्रुवतः चत्तुः परित्यागोऽम्बिकासुतात् ॥ १४६ ॥ त्यक्तस्य पाण्डुपुत्राणां समीपगमनं तथा। पुनरागमनञ्चैव धृतराष्ट्रस्य शासनात् ॥ १४७ ॥ कर्णप्रोत्साहनाच्चैव धार्त्तराष्ट्रस्य दुर्मतेः। वनस्थान् पाण्डवान् हन्तुं मन्त्रो दुर्य्योधनस्य च ॥१४८॥ तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतम्। निर्य्याणप्रतिषेधश्च सुरभ्याख्यानमेव च ॥ १४८ ॥ मैत्रेयागमनं चात्र राज्ञश्चैवानुशासनम्। शापोत्सर्गश्च तेनैव राज्ञो दुर्य्योधनस्य च ॥ १५० ॥ किर्मीरस्य वधश्चात्र भीमसेनेन संयुगे। वृष्णीनामागमश्चात्र पाञ्चालानाञ्च सर्वशः ॥ १५१ ॥ श्रुत्वा शकुनिना द्यूते निकृत्या-निर्ज्जितांश्च तान्। क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना ॥१५२॥ परिदेवनञ्च पाञ्चाल्या वासुदेवस्य सन्निधौ। आश्वासनञ्च कृष्णेन दुःखार्त्तायाः प्रकीर्त्तितम् ॥ १५३ ॥ तथा सौभवधाख्यानमत्रैवोक्तं महर्षिणा। सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां पुरीम् ॥ १५४ ॥ नयनं द्रौपदेयानां धृष्टद्युम्नेन चैव हि। प्रवेशः पाण्डवेयानां रम्ये द्वैतवने ततः ॥ १५५ ॥ धर्मराजस्य चात्रैव संवादः कृष्णया सह। संवादश्च तथा राज्ञा भीमस्यापि प्रकीर्त्तितः ॥ १५६ ॥ समीपं पाण्डुपुत्राणां व्यासस्यागमनं तथा। प्रतिस्मृत्याथ विद्याया दानं राज्ञो महर्षिणा ॥ १५७ ॥ गमनं काम्यके चापि व्यासे प्रतिगते ततः। अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः ॥ १५८ ॥ महादेवेन युद्धञ्च किरातवपुषा सह। दर्शनं लोकपालानामस्त्रप्राप्तिस्तथैव च ॥ १५९ ॥ महेन्द्रलोकगमनमस्त्रार्थे च किरीटिनः। यत्र चिन्ता समुत्पन्ना

धृतराष्ट्रस्य भूयसी ॥ १६० ॥ दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः। युधिष्ठिरस्य चार्त्तस्य व्यसनं परिदेवनम् ॥ १६१ ॥ नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयम्। दमयन्त्याः स्थितिर्यत्र नलस्य चरितं तथा ॥ १६२ ॥ तथाचाक्षहृदयप्राप्तिस्तस्मादेव महर्षितः। लोमशस्यागमस्तत्र स्वर्गात् पाण्डुसुतान् प्रति ॥१६३॥ वनवासगतानाञ्च पाण्डवानां महात्मनाम्। स्वर्गे प्रवृत्तिराख्याता लोमशेनार्जुनस्य वै ॥ १६४ ॥ सन्देशादर्जुनस्यात्र तीर्थाभिगमनक्रिया। तीर्थानाञ्च फलप्राप्तिः पुण्यत्वञ्चापि कीर्त्तितम् ॥ १६४ ॥ पुलस्त्यतीर्थयात्रा च नारदेन महर्षिणा। तीर्थयात्रा च तत्रैव पाण्डवानां महात्मनाम् ॥ १६६ ॥ कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्। तथा यज्ञविभूतिश्च गयस्यात्र प्रकीर्त्तिता ॥ १६७ ॥ आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम्। लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा ॥ १६८ ॥ ऋष्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः। जामदग्न्यस्य रामस्य चरितं भूरितेजसः ॥ १६९ ॥ कार्त्तवीर्य्यवधो यत्र हैहयानाञ्च वर्ण्यते। प्रभासतीर्थे पाण्डूनां वृष्णिभिश्च समागमः ॥ १७० ॥ सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः। शर्य्यातियज्ञे नासत्यौ कृतवान् सोमपीतिनौ ॥ १७१ ॥ ताभ्याञ्च यत्र स मुनिर्यौवनं प्रतिपादितः। मान्धातुश्चाप्युपाख्यानं राज्ञोऽत्रैव प्रकीर्त्तितम् ॥ १७२ ॥ जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः। पुत्रार्थमयजद्राजा लेभे पुत्रशतञ्च सः ॥ १७३ ॥ ततः श्येनकपोतीयमुपाख्यानमनुत्तमम्। इन्द्राग्नी यत्र धर्मश्चाप्यजिज्ञासञ्छिविं नृपः ॥ १७४ ॥ अष्टावक्रीयमत्रैव विवादो यत्र वन्दिना। अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत् ॥ १७५ ॥ नैयायिकानां मुख्येन वरुणस्यात्मजेन च। पराजितो यत्र वन्दी विवादेन महात्मना ॥ १७६ ॥ विजित्य सागरं प्राप्तं पितरं लब्धवा-

न्टषिः। यवक्रीतस्य चाख्यानं रैभ्यस्य च महात्मनः॥ १७७॥ गन्धमादनयात्रा च वासो नारायणाश्रमे। नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने॥ १७८॥ व्रजन् पथि महावाहुर्दृष्टवान् पवनात्मजम्। कदलीषण्डमध्यस्थं हनूमन्तं महावलम्॥ १७९॥ यत्र सौगन्धिकार्थेऽसौ नलिनीं तामधर्षयत्। यत्रास्य युद्धमभवत् सुमहद्राक्षसैः सह॥ १८०॥ यक्षैश्चैव महावीर्य्यैर्मणिमत्प्रमुखैस्तदा। जटासुरस्य च वधो राक्षसस्य वृकोदरात्॥ १८१॥ वृषपर्व्वणो राजर्षेस्ततोऽभिगमनं स्मृतम्। आर्ष्टिषेणाश्रमे चैषां गमनं वास एव च॥ १८२॥ प्रोत्साहनञ्च पाञ्चाल्या भीमस्यात्र महात्मनः। कैलासारोहणं प्रोक्तं यत्र यक्षैर्वलोत्कटैः॥ १८३॥ युद्धमासीन्महाघोरं मणिमत्प्रमुखैः सह। अवाप्य दिव्यान्यस्त्राणि गुर्व्वर्थं सव्यसाचिना॥ १८४॥ निवातकवचैर्युद्धं हिरण्यपुरवासिभिः। निवातकवचैर्घोरैर्दानवैः सुरशत्रुभिः॥ १८५॥ पौलोमैः कालकेयैश्च यत्र युद्धं किरीटिनः। वधश्चैषां समाख्यातो राज्ञस्तेनैव धीमता॥ १८६॥ अस्त्रसन्दर्शनारम्भो धर्म्मराजस्य सन्निधौ। पार्थस्य प्रतिषेधश्च नारदेन सुरर्षिणा॥ १८७॥ पुनश्चैवावरोहणं पाण्डूनां गन्धमादनात्। भीमस्य ग्रहणं चात्र पर्व्वताभोगवर्ष्मणा॥ १८८॥ भुजगेन्द्रेण वलिना तस्मिन् सुगहने वने। अमोचयद्यत्र चैनं प्रश्नानुक्त्वा युधिष्ठिरः॥ १८९॥ काम्यकागमनञ्चैव पुनस्तेषां महात्मनाम्। तत्रस्थांश्च पुनर्द्रष्टुं पाण्डवान् पुरुषर्षभान्॥ १९०॥ वासुदेवस्यागमनमत्रैव परिकीर्त्तितम्। मार्कण्डेयसमास्यायामुपाख्यानानि सर्व्वशः॥ १९१॥ पृथोर्वैन्यस्य यत्रोक्तमाख्यानं परमर्षिणा। संवादश्च सरस्वत्यास्तार्क्ष्यर्षेः सुमहात्मनः॥ १९२॥ मत्स्योपाख्यानमत्रैव प्रोच्यते तदनन्तरम्। मार्कण्डेयसमास्या च पुराणं परिकीर्त्त्यते॥ १९३॥ ऐन्द्रद्युम्नमुपाख्यानं धौन्धुमारन्तथैव च।

पतिव्रतायाश्चाख्यानं तथैवाङ्गिरसं स्मृतम् ॥ १९४ ॥ द्रौपद्याः कीर्त्तितश्चात्र संवादः सत्यभामया । पुनर्द्वैतवनञ्चैव पाण्डवाः समुपागताः ॥ १९५ ॥ घोषयात्रा च गन्धर्वैर्यत्र बद्धः सुयोधनः । ह्रियमाणस्तु मन्दात्मा मोचितोऽसौ किरीटिना ॥ १९६ ॥ धर्म-राजस्य चात्रैव मृगस्वप्ननिदर्शनम् । काम्यके काननश्रेष्ठे पुन-र्गमनमुच्यते ॥ १९७ ॥ व्रीहिद्रौणिकमाख्यानमत्रैव बहुविस्तरम् । दुर्वाससोऽप्युपाख्यानमत्रैव परिकीर्त्तितम् ॥ १९८ ॥ जयद्रथेना-पहारो द्रौपद्याश्चाश्रमान्तरात् । यत्रैनमन्वयाद्भीमो वायुवेग-समो जवे ॥ १९९ ॥ चक्रे चैनं पञ्चशिखं यत्र भीमो महाबलः । रामायणमुपाख्यानमत्रैव बहुविस्तरम् ॥ २०० ॥ यत्र रामेण विक्रम्य निहतो रावणो युधि । सावित्र्याश्चाप्युपाख्यानमत्रैव परिकीर्त्तितम् ॥ २०१ ॥ कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुर-न्दरात् । यत्रास्य शक्तिं शक्रोऽसावदादेकवधाय च ॥ २०२ ॥ आरणेयमुपाख्यानं यत्र धर्मोऽन्वशात् सुतम् । जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशम् ॥ २०३ ॥ एतदारण्यकं पर्व तृतीयं परिकीर्त्तितम् । अत्राध्यायशते द्वे तु सङ्ख्यायाः परि-कीर्त्तिते ॥ २०४ ॥ एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्त्तिताः । एकादश सहस्राणि श्लोकानां षट्शतानि च ॥ २०५ ॥ चतुःषष्टि-स्तथा श्लोकाः पर्वण्यस्मिन् प्रकीर्त्तिताः । अतः परं निबोधेदं वैराटं पर्व विस्तरम् ॥ २०६ ॥ विराटनगरे गत्वा श्मशाने विपुलां शमीम् । दृष्ट्वा सन्निदधुस्तत्र पाण्डवा ह्यायुधान्युत ॥२०७॥ यत्र प्रविश्य नगरं छद्मना न्यवसंस्तु ते । पाञ्चालीं प्रार्थयानस्य कामो-पहतचेतसः ॥२०८॥ दुष्टात्मनो वधो यत्र कीचकस्य वृकोदरात् । पाण्डवान्वेषणार्थञ्च राज्ञो दुर्य्योधनस्य च ॥ २०९ ॥ चराः प्रस्थापिताश्चात्र निपुणाः सर्वतो दिशम् । न च प्रवृत्तिस्तैर्लब्धा पाण्डवानां महात्मनाम् ॥ २१० ॥ गोग्रहश्च विराटस्य त्रिगर्त्तैः

प्रथमं कृतः। यत्रास्य युद्धं सुमहत्तैरासील्लोमहर्षणम् ॥ २११ ॥
क्रियमाणश्च यत्रासौ भीमसेनेन मोचितः। गोधनञ्च विराटस्य
मोचितं यत्र पाण्डवैः ॥ २१२ ॥ अनन्तरञ्च कुरुभिस्तस्य गोग्रहणं
कृतम्। समस्ता यत्र पार्थेन निर्जिताः कुरवो युधि ॥ २१३ ॥
प्रत्याहृतं गोधनञ्च विक्रमेण किरीटिना। विराटेनोत्तरा दत्ता
स्नुषा यत्र किरीटिनः ॥ २१४ ॥ अभिमन्युं समुद्दिश्य सौभद्रमरि-
घातिनम्। चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम् ॥ २१५ ॥
अत्रापि परिसङ्ख्याता अध्यायाः परमर्षिणा। सप्तषष्टिरथो पूर्णा
श्लोकानामपि मे शृणु ॥ २१६ ॥ श्लोकानां द्वे सहस्रे तु श्लोकाः
पञ्चाशदेव तु। उक्तानि वेदविदुषा पर्वण्यस्मिन्महर्षिणा ॥ २१७ ॥
उद्योगपर्व विज्ञेयं पञ्चमं शृण्वतः परम्। उपप्लव्ये निविष्टेषु
पाण्डवेषु जिगीषया ॥ २१८ ॥ दुर्य्योधनोऽर्जुनश्चैव वासुदेव-
मुपाश्रितौ। साहाय्यमस्मिन् समरे भवान्नौ कर्त्तुमर्हति ॥ २१९ ॥
इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः। अयुध्यमानमात्मानं
मन्त्रिणं पुरुषर्षभौ ॥ २२० ॥ अक्षौहिणीं वा सैन्यस्य कस्य किं
वा ददाम्यहम्। वव्रे दुर्य्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः
॥ २२१ ॥ अयुध्यमानं सचिवं वव्रे कृष्णं धनञ्जयः। मद्रराजञ्च
राजानमायान्तं पाण्डवान् प्रति ॥ २२२ ॥ उपहारैर्वञ्चयित्वा
वर्त्मन्येव सुयोधनः। वरदं तं वरं वव्रे साहाय्यं क्रियतां
मम ॥२२३॥ शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥२२३॥
शान्तिपूर्वं चाकथयद्यत्रेन्द्रविजयं नृपः ॥ २२४ ॥ पुरोहितप्रेष-
णञ्च पाण्डवैः कौरवान् प्रति। वैचित्रवीर्य्यस्य वचः समादाय
पुरोधसः ॥२२५॥ तथेन्द्रविजयञ्चापि यानञ्चैव पुरोधसः। सञ्जयं
प्रेषयामास शमार्थी पाण्डवान् प्रति ॥ २२६ ॥ यत्र दूतं महा-
राजो धृतराष्ट्रः प्रतापवान्। श्रुत्वा च पाण्डवान्यत्र वासुदेव-
पुरोगमान् ॥ २२७ ॥ प्रजागरं संप्रजज्ञे धृतराष्ट्रस्य चिन्तया।

विदुरो यत्र वाक्यानि विचित्राणि हितानि च ॥ २२८ ॥ श्रावयामास राजानं धृतराष्ट्रं मनीषिणम् । तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम् ॥ २२९ ॥ मनस्तापान्वितो राजा श्रावितः शोकलालसः । प्रभाते राजसमितौ सञ्जयो यत्र वा विभोः ॥ २३० ॥ ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्जुनस्य च । यत्र कृष्णोदयापन्नः सन्धिमिच्छन्महामतिः ॥ २३१ ॥ स्वयमागाच्छमं कर्त्तुं नगरं नागसाह्वयम् । प्रत्याख्यानञ्च कृष्णस्य राज्ञा दुर्य्योधनेन वै ॥ २३२ ॥ शमार्थे याचमानस्य पक्षयोरुभयोर्हितम् । दम्भोद्भवस्य चाख्यानमत्रैव परिकीर्त्तितम् ॥ २३३ ॥ वरान्वेषणमत्रैव मातलेश्च महात्मनः । महर्षेश्चापि चरितं कथितं गालवस्य वै ॥ २३४ ॥ विदुलायाश्च पुत्रस्य प्रोक्तं चाप्यनुशासनम् । कर्णदुर्य्योधनादीनां दुष्टं विज्ञाय मन्त्रितम् ॥ २३५ ॥ योगेश्वरत्वं कृष्णेण यत्र राज्ञां प्रदर्शितम् । रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः ॥ २३६ ॥ उपायपूर्वं शौटीर्य्यात् प्रत्याख्यातश्च तेन सः । आगम्य हास्तिनपुरादुपप्लव्यमरिन्दमः ॥ २३७ ॥ पाण्डवानां यथावृत्तं सर्वमाख्यातवान् हरिः । ते तस्य वचनं श्रुत्वा मन्त्रयित्वा च यद्धितम् ॥ २३८ ॥ सांग्रामिकं ततः सर्वं सज्जं चक्रुः परन्तपाः । ततो युद्धाय निर्याता नराश्वरथदन्तिनः ॥ २३९ ॥ नगराद्धास्तिनपुरादलसङ्ख्यानमेव च । यत्र राज्ञा ह्युलूकस्य प्रेषणं पाण्डवान् प्रति ॥ २४० ॥ श्वोभाविनि महायुद्धे दौत्येन कृतवान् प्रभुः । रथातिरथसङ्ख्यानमम्बोपाख्यानमेव च ॥ २४१ ॥ एतत् सुबहुवृत्तान्तं पञ्चमं पर्व भारते । उद्योगपर्व निर्द्दिष्टं सन्धिविग्रहमिश्रितम् ॥ २४२ ॥ अध्यायानां शतं प्रोक्तं षड़शीतिर्महर्षिणा । श्लोकानां षट्सहस्राणि तावन्त्येव शतानि च ॥ २४३ ॥ श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना । व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधनाः ॥ २४४ ॥ अतः परं विचि-

र्थं भीष्मपर्व प्रचक्ष्यते। जम्बूखण्डविनिर्माणं यत्रोक्तं सञ्ज-
येन ह॥ २४५॥ यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परम्।
यत्र युद्धमभूद्घोरं दशाहानि सुदारुणम्॥ २४६॥ कश्मलं यत्र
पार्थस्य वासुदेवो महामतिः। मोहजं नाशयामास हेतुभि-
र्मोक्षदर्शिभिः॥ २४७॥ समीक्ष्याधोक्षजः क्षिप्रं युधिष्ठिरहिते
रतः। रथादाप्लुत्य वेगेन स्वयं कृष्ण उदारधीः॥ २४८॥ प्रतो-
दपाणिराधावद्भीष्मं हन्तुं व्यपेतभीः। वाक्यप्रतोदाभिहतो यत्र
कृष्णेन पाण्डवः॥२४९॥ गाण्डीवधन्वा समरे सर्वशस्त्रभृताम्वरः।
शिखण्डिनं पुरस्कृत्य यत्र पार्थो महाधनुः॥ २५०॥ विनिघ्न-
न्निशितैर्बाणै रथाद्भीष्ममपातयत्। शरतल्पगतश्चैव भीष्मो यत्र
बभूव ह॥ २५१॥ षष्ठमे तत्समाख्यातं भारते पर्व विस्तृतम्।
अध्यायानां शतं प्रोक्तं तथा सप्त दशापरे॥ २५२॥ पञ्चश्लोक-
सहस्राणि सङ्ख्ययाष्टौ शतानि च। श्लोकाश्च चतुरशीतिरस्मिन्
पर्वणि कीर्त्तिताः॥ २५३॥ व्यासेन वेदविदुषा सङ्ख्याता भीष्म-
पर्वणि। द्रोणपर्व ततश्चित्रं बहुवृत्तान्तमुच्यते॥ २५४॥ सैनापत्ये
ऽभिषिक्तोऽथ यत्राचार्य्यः प्रतापवान्। दुर्य्योधनस्य प्रीत्यर्थं
प्रतिजज्ञे महास्त्रवित्॥ २५५॥ ग्रहणं धर्म्मराजस्य पाण्डुपुत्रस्य
धीमतः। यत्र संसप्तकाः पार्थमपनिन्यू रणाजिरात्॥ २५६॥
भगदत्तो महाराजो यत्र शक्रसमो युधि। सुप्रतीकेन नागेन स
हि शान्तः किरीटिना॥ २५७॥ यत्राभिमन्युं बहवो जघ्नुरेकं
महारथाः। जयद्रथमुखा बालं शूरमप्राप्तयौवनम्॥ २५८॥
हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे। अक्षौहिणीः सप्त हत्वा
हतो राजा जयद्रथः॥ २५९॥ यत्र भीमो महाबाहुः सात्य-
किश्च महारथः। अन्वेषणार्थं पार्थस्य युधिष्ठिरनृपाज्ञया॥२६०॥
प्रविष्टौ भारतीं सेनामप्रधृष्यां सुरैरपि। संसप्तकावशेषञ्च कृतं
निःशेषमाहवे॥ २६१॥ अलम्बुषः श्रुतायुश्च जलसन्धश्च वीर्य्यवान्।

सोमदत्तिर्विराटश्च द्रुपदश्च महारथः ॥ २६२ ॥ घटोत्कचादय-
श्चान्ये निहता द्रोणपर्व्वणि । अश्वत्थामापि चात्रैव द्रोणे युधि
निपातिते ॥ २६३ ॥ अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः ।
आग्नेयं कीर्त्त्यते यत्र रुद्रमाहात्म्यमुत्तमम् ॥ २६४ ॥ व्यासस्य
चाप्यागमनं माहात्म्यं कृष्णपार्थयोः । सप्तमं भारते पर्व्व मह-
देतदुदाहृतम् ॥ २६५ ॥ यत्र ते पृथिवीपालाः प्रायशो निधनं
गताः । द्रोणपर्व्वणि ये शूरा निर्द्दिष्टाः पुरुषर्षभाः ॥ २६६ ॥
अत्राध्यायशतं प्रोक्तं तथाध्यायाश्च सप्ततिः । अष्टौ श्लोकसह-
स्राणि तथा नवशतानि च ॥२६७॥ श्लोका नव तथैवात्र सङ्ख्याता-
स्तत्त्वदर्शिना । पाराशर्य्येण मुनिना सञ्चिन्त्य द्रोणपर्व्वणि ॥ २६८ ॥
अतः परं कर्णपर्व्व प्रोच्यते परमाद्भुतम् । सारथ्ये विनियोगश्च
मद्रराजस्य धीमतः ॥ २६९ ॥ आख्यातं यत्र पौराणं त्रिपुरस्य
निपातनम् । प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः ॥ २७० ॥
हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम् । वधः पाण्ड्यस्य च
तथा अश्वत्थाम्ना महात्मना ॥२७१॥ दण्डसेनस्य च ततो दण्डस्य
च वधस्तथा । द्वैरथे यत्र कर्णेन धर्म्मराजो युधिष्ठिरः ॥ २७२ ॥
संशयं गमितो युद्धे मिषतां सर्व्वधन्विनाम् । अन्योऽन्यं च प्रति
क्रोधो युधिष्ठिरकिरीटिनोः ॥ २७३ ॥ यत्रैवानुनयः प्रोक्तो
माधवेनार्जुनस्य हि । प्रतिज्ञापूर्व्वकश्चापि वधो दुःशासनस्य च
॥ २७४ ॥ भित्त्वा वृकोदरो रक्तं पीतवान् यत्र संयुगे । द्वैरथे
यत्र पार्थेन हतः कर्णो महारथः ॥ २७५ ॥ अष्टमं पर्व्व निर्द्दिष्ट-
मेतद्भारतचिन्तकैः । एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्व्वणि
॥ २७६ ॥ चत्वार्य्येव सहस्राणि नव श्लोकशतानि च । चतुः-
षष्टिस्तथा श्लोकाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः ॥ २७७ ॥ अतः परं
विचित्रार्थं शल्यपर्व्व प्रकीर्त्तितम् । हतप्रवीरे सैन्ये तु नेता
मद्रेश्वरोऽभवत् ॥ २७८ ॥ वृत्तानि रथयुद्धानि कीर्त्त्यन्ते यत्र

भागशः। विनाशः कुरुमुख्यानां शल्यपर्वणि कीर्त्त्यते॥ २७९॥
शल्यस्य निधनं चात्र धर्मराजान्महात्मनः। शकुनेश्च वधोऽत्रैव
सहदेवेन संयुगे॥ २८०॥ सैन्ये च हतभूयिष्ठे किञ्चिच्छिष्टे
सुयोधनः। ह्रदं प्रविश्य यत्रासौ संस्तभ्यापो व्यवस्थितः॥ २८१॥
प्रवृत्तिस्तत्र चाख्याता यत्र भीमस्य लुब्धकैः। क्षेपयुक्तै-
र्वचोभिश्च धर्मराजस्य धीमतः॥ २८२॥ ह्रदात् समुत्थितो यत्र
धार्त्तराष्ट्रोऽत्यमर्षणः। भीमेन गदया युद्धं यत्रासौ कृतवान्
सह॥ २८३॥ समवाये च युद्धस्य रामस्यागमनं स्मृतम्। सर-
स्वत्याश्च तीर्थानां पुण्यता परिकीर्त्तिता॥ २८४॥ गदायुद्धञ्च
तुमुलमत्रैव परिकीर्त्तितम्। दुर्य्योधनस्य राज्ञोऽथ यत्र
भीमेन संयुगे॥२८५॥ ऊरू भग्नौ प्रसह्याजौ गदया भीमवेगया।
नवमं पर्व निर्द्दिष्टमेतदद्भुतमर्थवत्॥ २८६॥ एकोनषष्टिरध्यायाः
पर्व्वण्यत्र प्रकीर्त्तिताः। सङ्ख्याता बहुवृत्तान्ताः श्लोकसङ्ख्यात्र
कथ्यते॥ २८७॥ त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा।
मुनिना सम्प्रणीतानि कौरवाणां यशोभृता॥ २८८॥ अतः परं
प्रवक्ष्यामि सौप्तिकं पर्व्व दारुणम्। भग्नोरुं यत्र राजानं दुर्य्यो-
धनममर्षणम्॥ २८९॥ अपयातेषु पार्थेषु त्रयस्तेऽभ्याययूरथाः।
कृतवर्म्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षितम्॥ २९०॥ समेत्य
ददृशुर्भूमौ पातितं रणमूर्द्धनि। प्रतिजज्ञे दृढ़क्रोधो द्रौणिर्यत्र
महारथः॥ २९१॥ अहत्वा सर्वपाञ्चालान् धृष्टद्युम्नपुरोगमान्।
पाण्डवांश्च सहामात्यान्न विमोक्ष्यामि दंशनम्॥ २९२॥ यत्रैव
मुक्त्वा राजानमपक्रम्य त्रयो रथाः। सूर्य्यास्तमनवेलायामासेदुस्ते
महद्वनम्॥ २९३॥ न्यग्रोधस्याथ महतो यत्राधस्तादवस्थिताः।
ततः काकान् बहून् रात्रौ दृष्ट्वोलूकेन हिंसितान्॥२९४॥ द्रौणिः
क्रोधसमाविष्टः पितुर्वधमनुस्मरन्। पाञ्चालानां प्रसुप्तानां वधं
प्रति मनो दधे॥ २९५॥ गत्वा च शिविरद्वारि दुर्द्दर्शं तत्र

राक्षसम्। घोररूपमपश्यत्स द्विभावृत्य धिष्ठितम्॥ २९६॥
तेन व्याघातमस्त्राणां क्रियमाणमवेक्ष्य च। द्रौणिर्यत्र विरूपाक्षं
रुद्रमाराध्य सत्वरः॥ २९७॥ प्रसुप्तान्निशि विश्वस्तान्धृष्टद्युम्न-
पुरोगमान्। पाञ्चालान् सपरीवारान्द्रौपदेयांश्च सर्वशः॥ २९८॥
कृतवर्म्मणा च सहितः कृपेण च विजघ्निवान्। यत्रामुच्यन्त ते
पार्थाः पञ्च कृष्णबलाश्रयात्॥ २९९॥ सात्यकिश्च महेष्वासः
शेषाश्च निधनं गताः। पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुताद्वधः
॥ ३००॥ धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः। द्रौपदी
पुत्रशोकार्त्ता पितृभ्रातृवधार्द्दिता॥ ३०१॥ कृतानशनसङ्कल्पा
यत्र भर्त्तॄनुपाविशत्। द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः
॥ ३०२॥ प्रियं तस्याश्चिकीर्षन् वै गदामादाय वीर्य्यवान्।
अन्वधावत् सुसंक्रुद्धो भारद्वाजगुरोः सुतम्॥ ३०३॥ भीम-
सेनभयाद्यत्र दैवेनाभिप्रचोदितः। अपाण्डवायेति रुषा द्रौणि-
रस्त्रमवासृजत्॥ ३०४॥ मैवमित्यब्रवीत् कृष्णः शमयंस्तस्य तद्वचः।
यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः॥ ३०५॥ द्रौणेश्च
द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा। द्रौणिद्वैपायनादीनां शापा-
श्चान्योन्यकारिताः॥ ३०६॥ मणिं तथा समादाय द्रोणपुत्रा-
न्महारथात्। पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः॥३०७॥
एतद्वै दशमं पर्व सौप्तिकं समुदाहृतम्। अष्टादशास्मिन्नध्यायाः
पर्व्वण्युक्ता महात्मना॥ ३०८॥ श्लोकानां कथितान्यत्र शतान्यष्टौ
प्रसङ्ख्यया। श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना॥३०९॥
सौप्तिकैषीकसम्बद्धे पर्व्वण्युत्तमतेजसा। अत ऊर्द्ध्वमिदं प्राहुः
स्त्रीपर्व करुणोदयम्॥ ३१०॥ पुत्रशोकाभिसन्तप्तः प्रज्ञाचक्षु-
र्नराधिपः। कृष्णोपनीतां यत्रासावायसीं प्रतिमां दृढ़ाम्॥३११॥
भीमसेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्ज ह। तथा शोकाभितप्तस्य
धृतराष्ट्रस्य धीमतः॥ ३१२॥ संसारगहनं बुद्ध्या हेतुभिर्मोक्ष-

दर्शनैः। विदुरेण च यत्रास्य राज्ञ आश्वासनं कृतम्॥ ३१३॥
धृतराष्ट्रस्य चात्रैव कौरवायोधनं तथा। सान्तःपुरस्य गमनं
शोकार्त्तस्य प्रकीर्त्तितम्॥ ३१४॥ विलापो वीरपत्नीनां यत्राति-
करुणः स्मृतः। क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः॥३१५॥
यत्र तान् क्षत्रियाः शूरान् संग्रामेष्वनिवर्त्तिनः। पुत्रान् भ्रातॄन्
पितॄंश्चैव ददृशुर्निहतान् रणे॥ ३१६॥ पुत्रपौत्रवधार्त्तायास्तथा-
त्रैव प्रकीर्त्तिता। गान्धार्य्याश्चापि कृष्णेन क्रोधोपशमनक्रिया
॥ ३१७॥ यत्र राजा महाप्राज्ञः सर्व्वधर्मभृताम्वरः। राज्ञां तानि
शरीराणि दाहयामास शास्त्रतः॥ ३१८॥ तोयकर्मणि चारब्धे
राज्ञामुदकदानिके। गूढ़ोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः
॥ ३१९॥ सुतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा। एतदेकाद-
दशं पर्व शोकवैक्लव्यकारकम्॥ ३२०॥ प्रणीतं सज्जनमनोवैक्ल-
व्याश्रुप्रवर्त्तकम्। सप्तविंशतिरध्यायाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः
॥ ३२१॥ श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता। सङ्ख्यया
भारताख्यानमुक्तं व्यासेन धीमता॥ ३२२॥ अतः परं शान्ति-
पर्व द्वादशम्बुद्धिवर्द्धनम्। यत्र निर्व्वेदमापन्नो धर्मराजो युधि-
ष्ठिरः॥ ३२३॥ घातयित्वा पितॄन् भ्रातॄन् पुत्रान् सम्बन्धिमातु-
लान्। शान्तिपर्व्वणि धर्माश्च व्याख्याताः शारतल्पिकाः॥ ३२४॥
राजभिर्व्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः। आपद्धर्माश्च तत्रैव
कालहेतुप्रदर्शिनः॥ ३२५॥ यान् बुद्धा पुरुषः सम्यक् सर्व्व-
ज्ञत्वमवाप्नुयात्। मोक्षधर्माश्च कथिता विचित्रा बहुविस्तराः
॥ ३२६॥ द्वादशं पर्व निर्द्दिष्टमेतत् प्राज्ञजनप्रियम्। अत्र
पर्व्वणि विज्ञेयमध्यायानां शतत्रयम्॥ ३२७॥ त्रिंशच्चैव तथा-
ध्याया नव चैव तपोधनाः। चतुर्द्दशसहस्राणि तथा सप्तशतानि
च॥ ३२८॥ सप्तश्लोकास्तथैवात्र पञ्चविंशतिसङ्ख्यया। अत-
ऊर्द्ध्वञ्च विज्ञेयमनुशासनमुत्तमम्॥३२९॥ यत्र प्रकृतिमापन्नः श्रुत्वा

धर्म्मविनिश्चयम् । भीष्माद्भागीरथीपुत्रात् कुरुराजो युधिष्ठिरः ॥ ३० ॥ व्यवहारोऽत्र कार्त्स्न्येन धर्म्मार्थीयः प्रकीर्त्तितः । विविधानाञ्च दानानां फलयोगाः प्रकीर्त्तिताः ॥ ३१ ॥ तथा पात्रविशेषाश्च दानानाञ्च परो विधिः । आचारविधियोगश्च सत्यस्य च परा गतिः ॥ ३२ ॥ महाभाग्यं गवाञ्चैव ब्राह्मणानां तथैव च । रहस्यञ्चैव धर्म्माणां देशकालोपसंहितम् ॥३३॥ एतत् सुबहुवृत्तान्तमुत्तमं चानुशासनम् । भीष्मस्यात्रैव सम्प्राप्तिः स्वर्गस्य परिकीर्त्तिता ॥ ३३४ ॥ एतत्त्रयोदशं पर्व्व धर्म्मनिश्चयकारकम् । अध्यायानां शतन्त्वत्र षट्चत्वारिंशदेव तु ॥ ३३५ ॥ श्लोकानान्तु सहस्राणि प्रोक्तान्यष्टौ प्रसङ्ख्यया । ततोऽश्वमेधिकं नाम पर्व्व प्रोक्तं चतुर्द्दशम् ॥ ३३६ ॥ तत् सम्वर्त्तमरुत्तीयं यत्राख्यानमनुत्तमम् । सुवर्णकोषसम्प्राप्तिर्जन्म चोक्तं परीक्षितः ॥ ३३७ ॥ दग्धस्यास्त्राग्निना पूर्व्वं कृष्णात् सञ्जीवनं पुनः । चर्य्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः ॥ ३३८ ॥ तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः । चित्राङ्गदायाः पुत्रेण पुत्रिकाया धनञ्जयः ॥ ३३९ ॥ संग्रामे वभ्रुवाहेण संशयं चात्र दर्शितः । अश्वमेधे महायज्ञे नकुलाख्यानमेव च ॥ ३४० ॥ इत्याश्वमेधिकं पर्व्व प्रोक्तमेतन्महाद्भुतम् । अध्यायानां शतञ्चैव त्रयोऽध्यायाश्चकीर्त्तिता ॥ ३४१ ॥ त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च । विंशतिश्च तथा श्लोकाः सङ्ख्यातास्तत्त्वदर्शिना ॥ ३४२ ॥ ततश्चाश्रमवासाख्यं पर्व्व पञ्चदशं स्मृतम् । यत्र राज्यं समुत्सृज्य गान्धार्य्या सहितो नृपः ॥ ३४३ ॥ धृतराष्ट्रोऽश्रमपदं विदुरश्च जगाम ह । यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा ॥ ३४४ ॥ पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता । यत्र राजा हतान् पुत्रान् पौत्रानन्यांश्च पार्थिवान् ॥ ३४५ ॥ लोकान्तरगतान् वीरानपश्यत् पुनरागतान् । ऋषेः प्रसादात् कृष्णस्य दृष्ट्वाश्चर्य्यमनुत्तमम् ॥ ३४६ ॥ त्यक्त्वा शोकं

सदारश्च सिद्धिं परमिकां गतः । यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः ॥ ३४७ ॥ सञ्जयश्च सहामात्यो विद्वान् गावल्गणिर्वशी । ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः ॥ ३४८ ॥ नारदाच्चैव शुश्राव वृष्णीनां कदनं महत् । एतदाश्रमवासाख्यं पर्वोक्तं सुमहाद्भुतम् ॥ ३४९ ॥ द्विचत्वारिंशदध्यायाः पर्वैतदभिसङ्ख्यया । सहस्रमेकं श्लोकानां पञ्चश्लोकशतानि च ॥ ३५० ॥ षड़ेव च तथा श्लोकाः सङ्ख्यातास्तत्त्वदर्शिना । अतः परं निबोधेदं मौषलं पर्व दारुणम् ॥ ३५१ ॥ यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शसहा युधि । ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः ॥३५२॥ आपाने पानकलिता दैवेनाभिप्रचोदिताः । एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम् ॥ ३५३ ॥ यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ । नातिचक्रमतुः कालं प्राप्तं सर्वहरं महत् ॥ ३५४ ॥ यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम् । दृष्ट्वा विषादमगमत् परां चार्त्तिं नरर्षभः ॥ ३५५ ॥ स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः । ददर्श यदुवीराणामापाने वैशसं महत् ॥ ३५६ ॥ शरीरं वासुदेवस्य रामस्य च महात्मनः । संस्कारं लम्भयामास वृष्णीणां च प्रधानतः ॥ ३५७ ॥ स वृद्धबालमादाय द्वारवत्यास्ततो जनम् । ददर्शापदि कष्टायां गाण्डीवस्य पराभवम् ॥ ३५८ ॥ सर्वेषाञ्चैव दिव्यानामस्त्राणामप्रसन्नताम् । नाशं वृष्णिकलत्राणां प्रभावाणामनित्यताम् ॥ ३५९ ॥ दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः । धर्मराजं समासाद्य सन्न्यासं समरोचयत् ॥ ३६० ॥ इत्येतन्मौषलं पर्व षोड़शं परिकीर्त्तितम् । अध्यायाष्टौ समाख्याताः श्लोकानाञ्च शतत्रयम् ॥ ३६१ ॥ श्लोकानां विंशतिश्चैव सङ्ख्यातास्तत्त्वदर्शिना । महाप्रास्थानिकं तस्मादूर्द्ध्वं सप्तदशं स्मृतम् ॥ ३६२ ॥ यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः । द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः ॥ ३६३ ॥ यत्र तेऽग्निं दद्-

भिरे लौहित्यं प्राप्य सागरम्। यत्राग्निना चोदितश्च पार्थ-
स्तस्मै महात्मने ॥ ३६४ ॥ ददौ सम्पूज्य यद्दिव्यं गाण्डीवं धनु-
रुत्तमम्। यत्र भ्रातॄन्निपतितान्द्रौपदीं च युधिष्ठिरः ॥ ३६५ ॥
दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन्। एतत् सप्तदशं पर्व
महाप्रास्थानिकं स्मृतम् ॥ ३६६ ॥ यत्राध्यायास्त्रयः प्रोक्ताः श्लोका-
नाञ्च शतत्रयम्। विंशतिश्च तथा श्लोकाः सङ्ख्यातास्तत्त्वदर्शिना
॥ ३६७ ॥ स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम्। प्राप्तं दैव-
रथं स्वर्गान्निष्टवान् यत्र धर्म्मराट् ॥ ३६८ ॥ आरोढुं सुमहाप्राज्ञ
आनृशंस्याच्छुना विना। तामस्याविचलां ज्ञात्वा स्थितिं धर्म्मे
महात्मनः ॥ ३६९ ॥ स्वरूपं यत्र तत्त्यक्त्वा धर्म्मेणासौ समन्वितः।
स्वर्गं प्राप्तः स च तथा यातनां विपुलां भृशम् ॥३७० ॥ देवदूतेन
नरकं यत्र व्याजेन दर्शितम्। शुश्राव यत्र धर्मात्मा भ्रातॄणां
करुणा गिरः ॥ ३७१ ॥ निदेशे वर्त्तमानानां देशे तत्रैव वर्त्तताम्।
अनुदर्शितश्च धर्म्मेण देवराज्ञा च पाण्डवः ॥३७२॥ आप्लुत्याकाश-
गङ्गायां देहं त्यक्त्वा समानुषम्। स्वधर्मनिर्ज्जितं स्थानं स्वर्गं प्राप्य
स धर्मराट् ॥ ३७३ ॥ मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह।
एत दष्टादशं पर्व प्रोक्तं व्यासेन धीमता ॥ ३७४ ॥ अध्यायाः पञ्च
सङ्ख्याताः पर्वण्यस्मिन्महात्मना। श्लोकानां द्वे शते चैव प्रसङ्ख्याते
तपोधनाः ॥ ३७५ ॥ नव श्लोकास्तथैवान्ये सङ्ख्याताः परमर्षिणा।
अष्टादशैवमुक्तानि पर्वाण्येतान्यशेषतः ॥ ३७६ ॥ खिलेषु हरि-
वंशश्च भविष्यञ्च प्रकीर्त्तितम्। दशश्लोकसहस्राणि विंशत् श्लोक-
शतानि च ॥ ३७७ ॥ खिलेषु हरिवंशे च सङ्ख्यातानि मह-
र्षिणा। एतत् सर्वं समाख्यातं भारते पर्वसंग्रहः ॥ ३७८ ॥
अष्टादश समाजग्मु रक्षौहिण्यो युयुत्सया। तन्महादारुणं
युद्धमहान्यष्टादशाभवत् ॥ ३७९ ॥ यो विद्याच्चतुरो वेदान्
साङ्गोपनिषदो द्विजः। न चाख्यानमिदं विद्यान्नैव स स्याद्वि-

चक्षुषः ॥ ३८० ॥ अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत्। कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥ ३८१ ॥ श्रुत्वा त्विदमुपाख्यानं श्रव्यमन्यन्न रोचते। पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव ॥ ३८२ ॥ इतिहासोत्तमादस्माज्जायन्ते कवि-बुद्धयः। पञ्चभ्य इव भूतेभ्यो लोकसम्विधयस्त्रयः ॥ ३८३ ॥ अस्याख्यानस्य विषये पुराणं वर्त्तते द्विजाः। अन्तरीक्षस्य विषये प्रजा इव चतुर्विधाः ॥३८४॥ क्रियागुणानां सर्वेषामिदमाख्यान-माश्रयः। इन्द्रियाणां समस्तानां चित्रा इव मनःक्रिया ॥ ३८५ ॥ अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते। आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ ३८६ ॥ इदं कविवरैः सर्वैराख्यान-मुपजीव्यते। उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३८७ ॥ अस्य काव्यस्य कवयो न समर्था विशेषणे। साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ ३८८ ॥ धर्मे मतिर्भवतु वः सततोत्थितानां स ह्येक एव परलोकगतस्य बन्धुः। अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥ ३८९ ॥ द्वैपा-यनौष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवञ्च। यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलैरभि-षेचनेन ॥ ३९० ॥ यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन्। महाभारतमाख्याय सन्ध्यां मुच्यति पश्चिमाम्। ३९१ ॥ यद्रात्रौ कुरुते पापं कर्मणा मनसा गिरा। महाभारतमाख्याय पूर्वां सन्ध्यां प्रमुच्यते ॥३९२॥ यो गोशतं कनकशृङ्गमयं ददाति विप्राय वेदविदुषे च बहुश्रुताय। पुण्याश्च भारतकथाः शृणुयाच्च नित्यं तुल्यं फलं भवति तस्य च तस्य चैव ॥ ३९३ ॥ आख्यानं तदिद-मनुत्तमं महार्थं विज्ञेयं महदिह पर्वसंग्रहेण। श्रुत्वादौ भवति नृणां सुखावगाहं विस्तीर्णं लवणजलं यथा प्लवेन ॥ ३९४ ॥

इति श्रीमहाभारते आदिपर्वणि पर्वसंग्रहः समाप्तः ॥ २ ॥

## अथ पौष्यपर्व ।

सौतिरुवाच । जनमेजयः पारिक्षितः सह भ्रातृभिः कुरु-क्षेत्रे दीर्घसत्त्रमुपास्ते ॥ १ ॥ तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्त्रमुपासीनेष्वागच्छत् सारमेयः ॥ २ ॥ स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् ॥ ३ ॥ तं माता रोरूयमाणमुवाच किं रोदिषि केनास्यभिहत इति ॥ ४ ॥ स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति ॥ ५ ॥ तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति ॥ ६ ॥ स तां पुनरुवाच नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिह इति ॥ ७ ॥ तच्छ्रुत्वा तस्य माता सरमा पुत्त्रदुःखार्त्ता तत् सत्त्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घं सत्त्रमुपास्ते ॥ ८ ॥ स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति । नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति ॥ ९ ॥ न किञ्चिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टन्त्वां भयमागमिष्यतीति ॥ १० ॥ जनमेजय एवमुक्तो देवशुन्या सरमया भृशं संभ्रान्तो विषण्णश्चासीत् ॥ ११ ॥ स तस्मिन् सत्त्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोत् यो मे पापकृत्यां शमयेदिति ॥ १२ ॥ स कदाचिन्मृगयां गतः पारिक्षितो जनमेजयः । कस्मिंश्चित् स्वविषये आश्रममपश्यत् ॥ १३ ॥ तत कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम ॥ १४ ॥ तस्य तं पुत्त्रमभिगम्य जनमेजयः पौरोहितः पौरोहित्याय वव्रे ॥ १५ ॥ स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्त्रो मम पुरोहितोऽस्त्विति ॥ १६ ॥ स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय पुत्त्रोऽयं मम सर्पाञ्जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपो-

वीर्य्यसम्भृतो मच्छुक्रपीतवत्यास्तस्याः कुक्षौ जातः ॥१७॥ समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम् ॥१८॥ अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कञ्चिदर्थमभियाचेत्तं तस्मै दद्यादयं यद्येतदुत्सहसे ततो नयस्वैनमिति ॥ १९ ॥ तेनैवमुक्तो जनमेजयस्तं प्रत्युवाचभगवं स्तत्तथा भविष्यतीति ॥ २० ॥ स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच मयायं वृत उपाध्यायो यदयं ब्रूयात्तत् कार्य्यमविचारयद्भिर्भवद्भिरिति ॥ २१ ॥ तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः। स तथा भ्रातॄन् सन्दिश्य तक्षशिलाम् प्रत्यभिप्रतस्थे तञ्च देशं वशे स्थापयामास ॥ २२ ॥ एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदस्तस्य शिष्यास्त्रयो बभूवुः उपमन्युरारुणिर्वेदश्चेति ॥२३॥ स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ केदारखण्डं बधानेति ॥ २४ ॥ स उपाध्यायेन सन्दिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत् केदारखण्डं बद्धुं नाशकत् ॥ २५ ॥ स क्लिश्यमानोऽपश्यदुपायं भवत्येवं करिष्यामीति ॥ २६ ॥ स तत्र संविवेश्य केदारखण्डे शयाने च तथा तस्मिंस्तदुदकं तस्थौ ॥ २७ ॥ ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् क्व आरुणिः पाञ्चाल्यो गत इति ॥ २८ ॥ ते तं प्रत्यूचुर्भगवंस्त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति। स एवमुक्तस्तान् शिष्यान् प्रत्युवाच तस्मात्तत्र सर्वे गच्छामो यत्र स गत इति ॥ २९ ॥ स तत्र गत्वा तस्याह्वानाय शब्दञ्चकार भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति ॥ ३० ॥ स तच्छ्रुत्वारुणिरुपाध्यायवाक्यं तस्मात् केदारखण्डात् सहसोत्थाय तमुपाध्यायमुपतस्थे ॥ ३१ ॥ प्रोवाच चैनमयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य्य केदारखण्डं भवन्तमुपस्थितः ॥ ३२ ॥ तदभिवादये भगवन्तमाज्ञापयतु भवान्

कमर्थं करवाणीति ॥ ३३ ॥ स एवमुक्त उपाध्यायः प्रत्युवाच यस्माद्भवान् केदारखण्डं विदार्य्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान् भविष्यतीत्युपाध्यायेनानुगृहीतः ॥ ३४ ॥ यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि। सर्व्व एव ते वेदाः प्रतिभास्यन्ति सर्व्वाणि च धर्म्मशास्त्राणीति ॥ ३५ ॥ स एवमुक्त उपाध्यायेनेष्टं देशं जगाम। अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम ॥३६॥ तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो गा रक्षस्वेति ॥ ३७ ॥ स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ३८ ॥ तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो केन वृत्तिं कल्पयसि पीवानसि दृढ़मिति ॥ ३९ ॥ स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति ॥ ४० ॥ तमुपाध्यायः प्रत्युवाच मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति। स तथेत्युक्त्वा भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् ॥ ४१ ॥ स तस्मादुपाध्यायः सर्व्वमेव भैक्ष्यमगृह्णात्। स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे ॥ ४२ ॥ तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो सर्व्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति ॥ ४३ ॥ स एवमुक्त उपाध्यायं प्रत्युवाच भगवते निवेद्य पूर्व्वमपरं चरामि तेन वृत्तिं कल्पयामीति ॥ ४४ ॥ तमुपाध्यायः प्रत्युवाच नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसीति ॥ ४५ ॥ स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ४६ ॥ तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच वत्सोपमन्यो अहं ते सर्व्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पय-

सौति ॥ ४७ ॥ स एवमुक्तस्तमुपाध्यायं प्रत्युवाच भो एतासां गवां पयसा वृत्तिं कल्पयामीति तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति ॥ ४८ ॥ स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे ॥ ४९ ॥ तमुपाध्यायः पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो भैक्ष्यं नाश्नासि नवान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति ॥ ५० ॥ स एवमुक्त उपाध्यायं प्रत्युवाच भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनात् पिबन्त उद्गिरन्ति ॥ ५१ ॥ तमुपाध्यायः प्रत्युवाच एते तदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्त्तमानः फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य पुनररक्षद्गाः ॥ ५२ ॥ तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्त्तोऽर्कपत्राण्यभक्षयत् ॥ ५३ ॥ स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव ततः सोऽन्धोऽपि चंक्रम्यमाणः कूपे पपात ॥ ५४ ॥ अथ तस्मिन्ननागच्छति सूर्य्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवोचत् नायात्युपमन्युः त ऊचुर्वनं गतो गा रक्षितुमिति ॥ ५५ ॥ तानाह उपाध्यायः मयोपमन्युः सर्वतः प्रतिषिद्धः स नियतं कुपितस्ततो नागच्छति चिरं ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार भो उपमन्यो क्वासि वत्सैहीति ॥ ५६ ॥ स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन् कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन् कूपे पतित इति ॥ ५७ ॥ स उपाध्यायं प्रत्युवाच अर्कपत्राणि भक्षयित्वान्धीभूतोऽस्म्यतः कूपे पतित इति ॥ ५८ ॥ तमुपाध्यायः प्रत्युवाच अश्विनौ स्तुहि तौ देवभिषजौ त्वां

चक्षुषन्तं कर्त्तारावितिं। स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिरृग्भिः॥ ५९ ॥ प्रपूर्व्वगौ पूर्व्वजौ चित्रभानू गिरावाशंसामि तपसा ह्यनन्तौ दिव्यौ सुपर्णौ विरजौ विमानावधिक्षियन्तौ भुवनानि विश्वा॥ ६० ॥ हिरण्मयौ शकुनौ साम्परायौ नासत्यदस्रौ सुनसौ वैजयन्तौ। शुक्लं वयन्तौ तरसा सुवेमावधिव्ययन्तावसितं विवस्वतः॥ ६१ ॥ ग्रस्तां सुपर्णस्य बलेन वर्त्तिकाममुञ्चतामश्विनौ सौभगाय। तावत् सुवृत्तावनमन्त मायया वसत्तमा गा अरुणा उदावहन्॥ ६२ ॥ षष्टिश्च गावस्त्रिशताश्च धेनव एकं वत्सं सुवते तं दुहन्ति। नानागोष्ठा विहिता एकदोहनास्तावश्विनौ दुहतो धर्म्ममुक्थ्यम्॥६३॥ एकां नाभिं सप्तशता अराः श्रिता प्रधिष्वन्या विंशतिरर्पिता अराः। अनेमिचक्रं परिवर्त्ततेऽजरं मायाश्विनौ समनक्ति चर्षणी॥ ६४ ॥ एकं चक्रं वर्त्तते द्वादशारं षण्णाभिमेकाक्षममृतस्य धारणम्। यस्मिन्देवा अधिविश्वे विषक्तास्तावश्विनौ मुञ्चतो मां विषीदतम्॥ ६५ ॥ अश्विनाविन्दुममृतं वृत्तभूयौ तिरोधत्तामश्विनौ दासपत्नी। हित्वा गिरिमश्विनौ गामुदा चरन्तौ तद्वृष्टिमह्ना प्रस्थितौ बलस्य॥ ६६ ॥ युवां दिशो जनयथो दशाग्रे समानं मूर्द्ध्नि रथ यातं वियन्ति। तासां यानमृषयोऽनुप्रयान्ति देवा मनुष्याः क्षितिमाचरन्ति॥ ६७ ॥ युवां वर्णान्विकुरुथो विश्वरूपांस्तेऽधिक्षियन्ते भुवनानि विश्वा। ते भानवोऽप्यनुसृताश्चरन्ति देवा मनुष्याः क्षितिमाचरन्ति॥ ६८ ॥ तौ नासत्यावश्विनौ वां महेऽहं स्रजं च यां बिभृथः पुष्करस्य। तौ नासत्यावमृतावृतावृधावृते देवास्तत् प्रपदे न सूते॥ ६९ ॥ मुखेन गर्भं लभेतां युवानौ गतासुरेतत् प्रपदे न सूते। सद्यो जातो मातरमत्ति गर्भस्तावश्विनौ मुञ्चथो जीवसे गाः॥ ७० ॥ इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एष ते-

ऽपूपोऽशानैनमिति ॥ ७१ ॥ स एवमुक्तः प्रत्युवाच नानृतपूर्वमूचतुर्भगवन्तौ । न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति ॥ ७२ ॥ ततस्तमश्विनावूचतुः आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे त्वमपि तथैव कुरुष्व यथाकृतमुपाध्यायेनेति ॥ ७३ ॥ स एवमुक्तः प्रत्युवाच एतत् प्रत्यनुनये भवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुमिति ॥ ७४ ॥ तमश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति ॥७५॥ स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत् आचचक्षे च स चास्य प्रीतिमान्बभूव आह चैनं यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति ॥ ७६ ॥ सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति एषा तस्यापि परीक्षोपमन्योः ॥ ७७ ॥ अथापरः शिष्यस्तस्यैवायोदधौम्यस्य वेदो नाम तमुपाध्यायः समादिदेश वत्स वेद इहास्यतां तावन्मम गृहे कञ्चित्कालं शुश्रूषणा च भवितव्यं श्रेयस्ते भविष्यतीति ॥ ७८ ॥ स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् गौरिव नित्यं गुरुणा धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलस्तस्य महता कालेन गुरुः परितोषं जगाम ॥ ७९ ॥ तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप एष तस्यापि परीक्षा वेदस्य ॥ ८० ॥ स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत ॥ ८१ ॥ तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः स शिष्यान्न किञ्चिदुवाच कर्म वा क्रियतां गुरुशुश्रूषा वेति ॥ ८२ ॥ दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान् परिक्लेशेन योजयितुं नेयेष ॥ ८३ ॥ अथ कस्मिंश्चित्काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्य

वरयित्वोपाध्यायं चक्रतुः ॥ ८४ ॥ स कदाचिद्याज्यकार्य्येणा-भिप्रस्थित उतङ्कनामानं शिष्यं नियोजयामास ॥ ८५ ॥ भो यत्किञ्चिदस्मद्गृहे परिहीयते तदिच्छाम्यहमपरिहीयमानं भवता क्रियमाणमिति स एवं प्रतिसन्दिश्योतङ्कं वेदः प्रवासं जगाम ॥ ८६ ॥ अथोतङ्क शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसतिस्म । स तत्र वसमान उपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः ॥ ८७ ॥ उपाध्यायानी ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियतामेषा विषीदतीति ॥८८॥ एवमुक्तस्ताः स्त्रियः प्रत्युवाच न मया स्त्रीणां वचनादिदमकार्य्यं करणीयं न ह्यहमुपाध्यायेन सन्दिष्टोऽकार्य्यमपि त्वया कार्य्य-मिति ॥ ८९ ॥ तस्य पुनरुपाध्यायः कालान्तरेण गृहमाज-गाम तस्मात् प्रवासात् स तु तद्वृत्तं तस्याशेषमुपलभ्य प्रीतिमान-भूत् ॥ ९० ॥ उवाच चैनं वत्सोतङ्क किन्ते प्रियं करवाणीति धर्मतो हि शुश्रूषितोऽस्मि भवता तेन प्रीतिः परस्परेण नो सम्बृद्धा तदनुजाने भवन्तं सर्वानेव कामानवाप्स्यसि गम्यतामिति ॥ ९१ ॥ स एवमुक्तः प्रत्युवाच किन्ते प्रियं करवाणीति एव-माहुः ॥ ९२ ॥ यश्चाधर्मेण वै ब्रूयाद्यश्चाधर्मेण पृच्छति । तयो-रन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥ ९३ ॥ सोऽहमनुज्ञातो भवता इच्छामीष्टं गुर्वर्थमुपहर्त्तुमिति । तेनैवमुक्त उपाध्यायः प्रत्युवाच वत्सोतङ्क उष्यतां तावदिति ॥ ९४ ॥ स कदाचि-दुपाध्यायमाहोतङ्कः आज्ञापयतु भवान् किं ते प्रियमुपहरामि गुर्वर्थमिति ॥ ९५ ॥ तमुपाध्यायः प्रत्युवाच वत्सोतङ्क बहुशो-माञ्चोदयसि गुर्वर्थमुपहरामीति तद्गच्छैनां प्रविश्योपाध्यायानीं पृच्छ किमुपहरामीति एषा यद्ब्रवीति तदुपहरस्वेति स एव मुक्तो उपाध्यायेनोपाध्यायानीमपृच्छत् भगवत्युपाध्यायेनास्म्यनु-ज्ञातो गृहं गन्तुमिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो गन्तुमिति

॥ ९६ ॥ तदाज्ञापयतु भवती किमुपहरामि गुर्वर्थमिति सैव-मुक्तोपाध्यायानी तमुतङ्कं प्रत्युवाच गच्छ पौष्यं प्रति राजानं कुण्डले भिक्षितुं तस्य क्षत्रियया पिनद्धे ॥ ९७ ॥ ते आनयस्व चतुर्थेऽहनि पुण्यकं भविता ताभ्यामावद्धाभ्यां शोभमाना ब्राह्मणान् परिवेष्टुमिच्छामि तत्सम्पादयस्व एवं हि कुर्वतः श्रेयो भवितान्यथा कुतः श्रेय इति ॥ ९८ ॥ स एवमुक्तस्तया प्रातिष्ठतोतङ्कः स पथि गच्छन्नपश्यदृषभमतिप्रमाणं तमधिरूढञ्च पुरुषमतिप्रमाणमेव स पुरुष उतङ्कमभ्यभाषत ॥ ९९ ॥ भो उतङ्कैतत् पुरीषमस्य वृषभस्य भक्षयस्वेति स एवमुक्तो नैच्छत् ॥ १०० ॥ तमाह पुरुषो भूयो भक्षयस्वोतङ्क माविचारयोपाध्यायेनापि ते भक्षितं पूर्वमिति ॥ १०१ ॥ स एवमुक्तो वाढमित्युक्त्वा तदा तदृषभस्य मूत्रं पुरीषञ्च भक्षयित्वोतङ्कः ससंभ्रमादुत्थित एवापोऽपस्पृश्य प्रतस्थे ॥ १०२ ॥ यत्र स क्षत्रियः पौष्यस्तमुपेत्यासीनमपश्यदुतङ्कं स उतङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच ॥१०३॥ अर्थी भवन्तमुपागतोऽस्मीति स एनमभिवाद्योवाच भगवन् पौष्यः खल्वहं किङ्करवाणीति ॥ १०४ ॥ स तमुवाच गुर्वर्थं कुण्डलयोरर्थेनाभ्यागतोऽस्मीति ये वै ते क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति ॥ १०५ ॥ तं प्रत्युवाच पौष्यः प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत् ॥ १०६ ॥ स पौष्यं पुनरुवाच न युक्तं भवताहमनृतेनोपचरितुं न हि तेऽन्तःपुरे क्षत्रिया सन्निहिता नैनां पश्यामि ॥ १०७ ॥ स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योतङ्कं प्रत्युवाच नियतं भवानुच्छिष्टः स्मर तावन्न हि सा क्षत्रिया उच्छिष्टेनाशुचिना शक्या द्रष्टुं पतिव्रतात्वात् सैषा नाशुचेर्दर्शनमुपैतीति ॥ १०८ ॥ अथैवमुक्त उतङ्कः स्मृत्वोवाचास्ति खलु मयोत्थितेनोपस्पृष्टं शीघ्रं गच्छता चेति । तं पौष्यः प्रत्युवाच एष ते व्यति-

श्रमो नोत्थितेनोपस्पृष्टं भवतीति शीघ्रं गच्छता चेति॥ १०९॥
अथोतङ्कस्तं तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपाद-
वदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिः पीत्वा
द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश॥ ११०॥
ततस्तां क्षत्रियामपश्यत् सा च दृष्ट्वैवोतङ्कं प्रत्युत्थायाभिवाद्यो-
वाच स्वागतं ते भगवन्नाज्ञापय किङ्करवाणीति॥ १११॥ स
तामुवाचैते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति सा प्रीता
तेन तस्य सद्भावेन पात्रोऽयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले-
ऽवमुच्यास्मै प्रायच्छदाह चैनमेते कुण्डले तक्षको नागराजः सुभृशं
प्रार्थयत्यप्रमत्तो नेतुमर्हसीति॥ ११२॥ स एवमुक्तस्तां क्षत्रियां
प्रत्युवाच भवती सुनिर्वृता भव न मां शक्तस्तक्षको नागराजो
धर्षयितुमिति॥ ११३॥ स एवमुक्त्वा तां क्षत्रियामामन्त्र्य
पौष्यसकाशमागच्छत् आह चैनं भोः पौष्य प्रीतोऽस्मीति तमु-
तङ्कं पौष्यः प्रत्युवाच॥ ११४॥ भगवंश्चिरेण पात्रमासाद्यते
भवांश्च गुणवानतिथिस्तदिच्छे श्राद्धं कर्त्तुं क्रियतां क्षण
इति॥ ११५॥ तमुतङ्कः प्रत्युवाच कृतक्षण एवास्मि शीघ्र-
मिच्छामि यथोपपन्नमुपस्कृतं भवतेति स तथेत्युक्त्वा यथो-
पपन्नेनान्नेनैनं भोजयामास॥ ११६॥ अथोतङ्कः सकेशं शीत-
मन्नं दृष्ट्वा अशुच्येतदिति मत्वा तं पौष्यमुवाच यस्मान्मे अशुच्यन्नं
ददासि तस्मादन्धो भविष्यसीति॥ ११७॥ तं पौष्य प्रत्युवाच
यस्मात्त्वमप्यदुष्टमन्नं दूषयसि तस्मात्त्वमनपत्यो भविष्यसीति तमु-
तङ्क प्रत्युवाच॥ ११८॥ न युक्तं भवतान्नमशुचि दत्त्वा प्रति-
शापं दातुं तस्मादन्नमेव प्रत्यक्षीकुरु ततः पौष्यस्तदन्नमशुचिं
दृष्ट्वा तस्याशुचिभावमपरोक्षयामास॥ ११९॥ अथ तदन्नं
मुक्तकेश्या स्त्रियोपहृतमनुष्णं सकेशं चाशुच्येतदिति मत्वा
तमृषिमुतङ्कं प्रसादयामास॥ १२०॥ भगवन्नेतदज्ञानादन्नं

सकेशमुपाहृतं शीतं तत् चामशि भवन्तं न भवेयमन्ध इति तमु-
तङ्क प्रत्युवाच॥ १२१॥ न मृषा ब्रवीमि भूत्वा त्वमन्धो न-
चिरादनन्धो भविष्यसीति ममापि शापो भवता दत्तो न भवेदिति
॥ १२२॥ तं पौष्यः प्रत्युवाच न चाहं शक्तः शापं प्रत्यादातुं
न हि मे मन्युरद्याप्युपशमङ्गच्छति किञ्चैतद्भवता न ज्ञायते यथा
॥ १२३॥ नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्ण-
धारः। तदुभयमेतद्विपरीतं क्षत्रियस्य वाङ्नवनीतं हृदयं
तीक्ष्णधारमिति ॥१२४॥ तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं
शापमन्यथाकर्त्तुं गम्यतामिति तमुतङ्कः प्रत्युवाच भवताहमन्न-
स्याशुचिभावमालक्ष्य प्रत्यनुनीतः प्राक्तोऽभिहितम्॥ १२५॥ यस्मा-
ददुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति। दुष्टे चान्ने
नैष मम शापो भविष्यतीति॥ १२६॥ साधयामस्तावदित्युक्त्वा
प्रातिष्ठतोतङ्कः ते कुण्डले गृहीत्वा सोऽपश्यदथ पथि नग्नं क्षप-
णकमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानञ्च॥ १२७॥ अथो-
तङ्कस्ते कुण्डले सन्न्यस्य भूमावुदकार्थं प्रचक्रमे एतस्मिन्नन्तरे स
क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत्॥ १२८॥
तमुतङ्कोऽभिसृत्य कृतोदककार्य्यः शुचिः प्रयतो नमो देवेभ्यो गुरु-
भ्यश्च कृत्वा महता जवेन तमन्वयात्॥ १२९॥ तस्य तक्षको
दृढमासन्नः स तं जग्राह गृहीतमात्रः स तद्रूपं विहाय तक्षक-
स्वरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं प्रविवेश॥ १३०॥
प्रविश्य च नागलोकं स्वभवनमगच्छत् अथोतङ्कस्तस्याः क्षत्रियाया
वचः स्मृत्वा तं तक्षकमन्वगच्छत्॥ १३१॥ स तद्बिलं दण्ड-
काष्ठेन चखान न चाशकत् तं क्लिश्यमानमिन्द्रोऽपश्यत् स वज्रं
प्रेषयामास॥ १३२॥ गच्छास्य ब्राह्मणस्य साहाय्यं कुरुष्वेति।
अथ वज्रं दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत्॥ १३३॥ तमु-
तङ्कोऽनुविवेश तेनैव बिलेन प्रविश्य च तं नागलोकमपर्य्यन्त-

अनेकविधप्रासादहर्म्यवलभीनिर्य्यूहशतसङ्कुलमुच्चावचक्रीड़ाश्चर्य्य-स्थानावकीर्णमपश्यत् ॥ १३४ ॥ स तत्र नागांस्तानस्तुवदेभिः श्लोकैः ये ऐरावतराजानः सर्पाः समितिशोभनाः। क्षरन्त इव जीमूताः सविद्युत्पवनेरिताः ॥ १३५ ॥ सुरूपा बहुरूपाश्च तथा कल्माषकुण्डलाः। आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥ १३६ ॥ बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे। तत्र-स्थानपि संस्तौमि महतः पन्नगानहम् ॥ १३७ ॥ इच्छेत्कोऽर्कांशुः सेनायां चर्त्तुमैरावतं विना। शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः। सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रोऽयमेजति ॥१३८॥ ये चैनमुपसर्पन्ति ये च दूरपथङ्गताः। अहमैरावतज्येष्ठभ्रातृभ्यो-ऽकरवं नमः ॥ १३९ ॥ यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत् पुरा। तं नागराजमस्तौषं कुण्डलार्थाय तक्षकम् ॥ १४० ॥ तक्षकश्चाश्वसेनश्च नितंत्र सहचरावुभौ। कुरुक्षेत्रे च वसतां नदीमिक्षुमतीमनु ॥ १४१ ॥ जघन्यजस्तक्षकस्य श्रुतसेनेति यः सुतः। अवसद्यो महद्यूम्नि प्रार्थयन्नागमुख्यताम्। करवाणि सदा चाहं नमस्तस्मै महात्मने ॥१४२॥ एवं स्तुत्वा स विप्रर्षिस्तङ्को भुजगोत्तमान्। नैव ते कुण्डले लेभे ततश्चिन्तामुपागमत् ॥१४३॥ एवं स्तुवन्नपि नागान् यदा ते कुण्डले नालभत्तदापश्यत् स्त्रियौ तन्त्रे अधिरोप्य सुवेमे पटं वयन्त्यौ तस्मिंस्तन्त्रे कृष्णाः सिताश्च तन्तवश्चक्रं चापश्यत् द्वादशारं षड़्भिः कुमारैः परिवर्त्त्यमानं पुरुषं चापश्यदश्वञ्च दर्शनीयम्। स तान् सर्वांस्तुष्टाव एभि-र्मन्त्रवादश्लोकैः ॥ १४४ ॥ त्रीण्यर्पितान्यत्र शतानि मध्ये षष्टिश्च नितंत्र चरति ध्रुवेऽस्मिन्। यक्रे चतुर्विंशतिपर्वयोगी षड़्वै कुमाराः परिवर्त्तयन्ति ॥ १४५ ॥ तन्त्रञ्चेदं विश्वरूपे युवत्यौ वयतस्तन्तून् सततं वर्त्तयन्त्यौ। कृष्णान् सितांश्चैव विवर्त्तयन्त्यौ भूतान्यजस्रं भुवनानि चैव ॥ १४६ ॥ वज्रस्य भर्त्ता भुवनस्य गोप्ता वृत्रस्य

हन्ता नमुचेर्निहन्ता। कृष्णे वसानो वसने महात्मा सत्यानृते यो विविनक्ति लोके॥ १४७॥ यो वाजिनं गर्भमपां पुराणं वैश्वानरं वाहनमभ्युपैति। नमोऽस्तु तस्मै जगदीश्वराय लोकत्रयेशाय पुरन्दराय॥ १४८॥ ततः स एनं पुरुषः प्राह प्रीतोऽस्मि तेऽहमनेन स्तोत्रेण किन्ते प्रियं करवाणीति॥ १४९॥ स तमुवाच नागा मे वशमीयुरिति स चैनं पुरुषः पुनरुवाच एतमश्वमपाने धमस्वेति॥ १५०॥ ततोऽश्वस्यापानमधमत्ततोऽश्वाद्धम्यमानात् सर्वस्रोतोभ्यः पावकार्चिषः सधूमा निष्पेतुः॥१५१ ताभिर्नागलोक उपधूपितेऽथ संभ्रान्तस्तक्षकोऽग्नेस्तेजोभयाद्विषण्णः कुण्डले गृहीत्वा सहसा भवनान्निष्क्रम्योतङ्कमुवाच॥ १५२॥ इमे कुण्डले गृह्णातु भवानिति स ते प्रतिजग्राहोतङ्कः प्रतिगृह्य च कुण्डलेऽचिन्तयत्॥ १५३॥ अद्य तत् पुण्यकमुपाध्यायान्या दूरं चाहमभ्यागतः स कथं सम्भावयेयमिति तत एनं चिन्तयानमेव स पुरुष उवाच॥ १५४॥ उतङ्क एनमेवाश्वमधिरोह त्वां क्षणेनैवोपाध्यायकुलं प्रापयिष्यतीति॥ १५५॥ स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलं उपाध्यायानी च स्नाता केशानावापयन्त्युपविष्टोतङ्को नागच्छतीति शापायास्य मनो दधे॥ १५६॥ अथैतस्मिन्नन्तरे स उतङ्कः प्रविश्योपाध्यायगृहे उपाध्यायानीमभ्यवादयत् ते चास्यै कुण्डले प्रायच्छत् सा चैनं प्रत्युवाच॥ १५७॥ उतङ्क देशे कालेऽभ्यागतं स्वागतं ते वत्स त्वमनागसि मया न शप्तः श्रेयस्तवोपस्थितं सिद्धिमाप्नुहीति॥ १५८॥ अथोतङ्क उपाध्यायमभ्यवादयत्। तमुपाध्यायः प्रत्युवाच वत्सोतङ्क स्वागतं ते किं चिरं कृतमिति॥ १५९॥ तमुतङ्क उपाध्यायं प्रत्युवाच भोस्तक्षकेण मे नागराजेन विघ्नः कृतोऽस्मिन् कर्मणि तेनास्मि नागलोकं गतः॥ १६०॥ तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ तस्मिंश्च कृष्णाः सिताश्च तन्तवः

किं तत् ॥ १६१ ॥ तत्र च मया चक्रं दृष्टं द्वादशारं षट् चैनं कुमाराः परिवर्त्तयन्ति तदपि किं पुरुषश्चापि मया दृष्टः स चापि कः अश्वश्चातिप्रमाणो दृष्टः स चापि कः ॥ १६२ ॥ पथि गच्छता च मया वृषभो दृष्टस्तञ्च पुरुषोऽधिरूढ़स्तेनास्मि सोपचारमुक्तः उतङ्कास्य ऋषभस्य पुरीषं भक्षय उपाध्यायेनापि ते भक्षित-मिति ॥१६३॥ ततस्तस्य वचनान्मया तदृषभस्य पुरीषमुपयुक्तं स चापि वा कः तदेतद्भवतोपोदिष्टमिच्छेयं श्रोतुं किं तदिति ॥१६४ स तेनैवमुक्त उपाध्यायः प्रत्युवाच ये ते स्त्रियौ धाता विधाता च ये च ते कृष्णाः सितास्तन्तवस्ते रात्र्यहनी यदपि तच्चक्रं द्वादशारं षड़् वै कुमाराः परिवर्त्तयन्ति तेऽपि षड़ृतवः सम्वत्सरश्चक्रम् ॥ १६५ ॥ यः पुरुषः स पर्ज्जन्यः योऽश्वः सोऽग्निः य ऋषभस्त्वया पथि गच्छता दृष्टः स ऐरावतो नागराट् ॥१६६॥ यश्चैनमधिरूढ़ः पुरुषः स चेन्द्रः यदपि ते भक्षितं तस्य ऋषभस्य पुरीषं तदमृतं तेन खल्वसि तस्मिन्नागभवने न व्यापन्नस्त्वम् ॥ १६७ ॥ स हि भग-वानिन्द्रो मम सखा त्वदनुक्रोशादिममनुग्रहं कृतवान् तस्मात् कुण्डले गृहीत्वा पुनरागतोऽसि ॥१६८॥ तत् सौम्य गम्यतामनुजाने भवन्तं श्रेयोऽवाप्स्यसीति स उपाध्यायेनानुज्ञातोभगवानुतङ्क क्रुद्ध-स्तक्षकं प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे ॥१६९॥ स हास्तिन-पुरं प्राप्य न चिराद्विप्रसत्तमः। समागच्छत् सराजानमुतंको जन-मेजयम् ॥१७०॥ पुरा तक्षशिलासंस्थं निवृत्तमपराजितम्। सम्य-ग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम् ॥१७१॥ तस्मै जयाशिषः पूर्वं यथान्यायं प्रयुज्य सः। उवाचैनं वचःकाले शब्दसम्पन्नया गिरा ॥

उतंक उवाच। अन्यस्मिन् करणीये तु कार्य्ये पार्थिवसत्तम। बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम ॥ १७३ ॥

सौतिरुवाच। एवमुक्तस्तु विप्रेण स राजा जनमेजयः। अर्च्चयित्वा यथान्यायं प्रत्युवाच द्विजोत्तमम् ॥ १७४ ॥

जनमेजय उवाच। आसां प्रजानां परिपालनेन स्वं क्षत्रधर्मं परिपालयामि। प्रब्रूहि मे किं करणीयमद्य येनासि कार्य्येण समागतस्त्वम्॥ १७५॥

सौतिरुवाच। स एवमुक्तस्तु नृपोत्तमेन द्विजोत्तमः पुण्यकृतां वरिष्ठः। उवाच राजानमदीनसत्त्वं स्वमेव कार्य्यं नृपते कुरुष्व १७६

उतंक उवाच। तक्षकेण महीन्द्रेन्द्र येन ते हिंसितः पिता। तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने॥ १७७॥ कार्य्यकालं हि मन्येऽहं विधिदृष्टस्य कर्मणः। तद्गच्छापचितिं राजन् पितुस्तस्य महात्मनः॥ १७८॥ तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना। पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः॥ १७९॥ बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः। अकार्य्यं कृतवान् पापो योऽदशत् पितरं तव॥ १८०॥ राजर्षिवंशगोप्तारममरप्रतिमं नृपम्। यियासुः काश्यपञ्चैव न्यवर्त्तयत पापकृत्॥ १८१॥ होतुमर्हसि तं पापं ज्वलिते हव्यवाहने। सर्पसत्रे महाराज त्वरितं तद्विधीयताम्॥ १८२॥ एवं पितुश्चापचितिं कृतवांस्त्वं भविष्यसि। मम प्रियञ्च सुमहत् कृतं राजन् भविष्यति॥ १८३॥ कर्मणः पृथिवीपाल मम येन दुरात्मना। विघ्नः कृतो महाराज गुर्वर्थं चरतोऽनघ॥ १८४॥

सौतिरुवाच। एतच्छ्रुत्वा तु नृपतिस्तक्षकाय चुकोप ह। उतंकवाक्यहविषा दीप्तोऽग्निर्हविषा यथा॥ १८५॥ अपृच्छत् स तदा राजा मन्त्रिणस्तान् सुदुःखितः। उतंकस्यैव सान्निध्ये पितुः स्वर्गगतिं प्रति॥ १८६॥ तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत्। यदैव वृत्तं पितरमुतंकादशृणोत्तदा॥१८७॥

इति श्रीमहाभारते आदिपर्वणि पौष्याख्यानं समाप्तं तृतीयोऽध्यायः॥ ३॥

---

अथ पौलोमपर्व ।

लोमहर्षणपुत्त्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे ॥१॥ पौराणिकः पुराणे कृतश्रमः स कृताञ्जलिस्तानुवाच किम्भवन्तः श्रोतुमिच्छन्ति किमहं ब्रुवाणीति ॥ २ ॥ तमृषय ऊचुः परमं लौमहर्षणे वक्ष्यामस्त्वां नः प्रतिवक्ष्यसि वचः शुश्रूषतां कथा-योगं नः कथायोगे ॥ ३ ॥ तत्र भगवान् कुलपतिस्तु शौनको-ऽग्निशरणमध्यास्ते ॥ ४ ॥ योऽसौ दिव्याः कथा वेद देवतासुर-संश्रिताः । मनुष्योरगगन्धर्वकथा वेद च सर्वशः ॥ ५ ॥ स चाप्य-स्मिन्मखे सौते विद्वान् कुलपतिर्द्विजः । दक्षो धृतव्रती धीमा-ञ्छास्त्रे चारण्यके गुरुः ॥ ६ ॥ सत्यवादी शमपरस्तपस्वी नियत-व्रतः । सर्वेषामेव नो मान्यः स तावत् प्रतिपाल्यताम् ॥ ७ ॥ तस्मिन्नध्यासति गुरावासनं परमार्चितम् । ततो वक्ष्यसि यत्त्वां स प्रक्ष्यति द्विजसत्तमः ॥ ८ ॥

सौतिरुवाच । एवमस्तु गुरौ तस्मिन्नुपविष्टे महात्मनि । तेन पृष्टः कथाः पुण्या वक्ष्यामि विविधाश्रयाः ॥ ९ ॥ सोऽथ विप्रर्षभः सर्वं कृत्वा कार्यं यथाविधि । देवान्वाग्भिः पितॄनद्भिस्तर्पयित्वा-जगाम ह ॥ १० ॥ यत्र ब्रह्मर्षयः सिद्धाः सुमासीना धृतव्रताः । यज्ञायतनमाश्रित्य सूतपुत्रपुरःसराः ॥ ११ ॥ ऋत्विक्ष्वथ सद-स्येषु स वै गृहपतिस्तदा । उपविष्टेषूपविष्टः शौनकोऽथाब्रवी-दिदम् ॥ १२ ॥

इति आदिपर्वणि कथाप्रवेशो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

शौनक उवाच। पुराणमखिलं तात पिता तेऽधीतवान् पुरा। कच्चित्त्वमपि तत् सर्वमधीषे लौमहर्षणे॥ १॥ पुराणे हि कथा दिव्या आदिवंशाश्च धीमताम्। कथ्यन्ते ये पुरास्माभिः श्रुतपूर्वाः पितुस्तव॥ २॥ तत्र वंशमहं पूर्वं श्रोतुमिच्छामि भार्गवम्। कथयस्व कथामेतां कल्याः स्म श्रवणे तव॥ ३॥

सूत उवाच। यदधीतं पुरा सम्यक् द्विजश्रेष्ठैर्महात्मभिः। वैशम्पायनविप्राग्र्यैस्तैश्चापि कथितं यथा॥ ४॥ यदधीतञ्च पित्रा मे सम्यक् चैव ततो मया। तावच्छृणुष्व यो देवैः सेन्द्रैः सर्षिमरुद्गणैः॥ ५॥ पूजितः प्रवरो वंशो भार्गवो भृगुनन्दन। इमं वंशमहं पूर्वं भार्गवन्ते महामुने॥ ६॥ निगदामि यथायुक्तं पुराणाश्रयसंयुतम्। भृगुर्महर्षिर्भगवान् ब्रह्मणा वै स्वयम्भुवा॥ ७॥ वरुणस्य क्रतौ जातः पावकादिति नः श्रुतम्। भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः॥ ८॥ च्यवनस्य च दायादः प्रमतिर्नाम धार्मिकः। प्रमतेरप्यभूत् पुत्रो घृताच्यां रुरुरित्युत॥ ९॥ रुरोरपि सुतो जज्ञे शुनको वेदपारगः। प्रमद्वरायां धर्मात्मा तव पूर्वपितामहः॥ १०॥ तपस्वी च यशस्वी च श्रुतवान् ब्रह्मवित्तमः। धार्मिकः सत्यवादी च नियतो नियताशनः॥ ११॥

शौनक उवाच। सूतपुत्र यथा तस्य भार्गवस्य महात्मनः। च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः॥ १२॥

सौतिरुवाच। भृगोः सुदयिता भार्य्या पुलोमेत्यभिविश्रुता। तस्यां समभवद्गर्भो भृगुवीर्य्यसमुद्भवः॥ १३॥ तस्मिन् गर्भेऽथ सम्भूते पुलोमायां भृगूद्वह। समये समशीलिन्यां धर्मपत्न्यां यशस्विनः॥ १४॥ अभिषेकाय निष्क्रान्ते भृगौ धर्मभृताम्वरे। आश्रमं तस्य रक्षोऽथ पुलोमाभ्याजगाम ह॥ १५॥ तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्य्यामनिन्दिताम्। हृच्छयेन समाविष्टो विचेताः

समपद्यत ॥ १६ ॥ अभ्यागतन्तु दृष्ट्वा पुलोमा चारुदर्शना। न्यमन्त्रयत वन्येन फलमूलादिना तदा ॥ १७ ॥ तान्तु रक्षस्तदा ब्रह्मन् हृच्छयेनाभिपीड़ितः। दृष्ट्वा हृष्टमभूद्राजन् जिहीर्षुस्तामनिन्दिताम् ॥ १८ ॥ जातमित्यब्रवीत् कार्य्यं जिहीर्षुर्मुदितः शुभाम्। सा हि पूर्वं वृता तेन पुलोम्ना तु शुचिस्मिता ॥ १९ ॥ तान्तु प्रादात् पिता पश्चाद्भृगवे शास्त्रवत्तदा। तस्य तत् किल्बिषं नित्यं हृदि वर्त्तति भार्गव ॥ २० ॥ इदमन्तरमित्येवं हर्त्तुं चक्रे मनस्तदा। अथाग्निशरणेऽपश्यज्ज्वलन्तं जातवेदसम् ॥ २१ ॥ तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा। शंस मे कस्य भार्य्येयमग्ने पृच्छे ऋतेन वै ॥ २२ ॥ मुखं त्वमसि देवानां वद पावक पृच्छते। मया हीयं वृता पूर्वम्भार्य्यार्थे वरवर्णिनी ॥ २३ ॥ पश्चादिमां पिता प्रादाद्भृगवेऽनृतकारिणे। सेयं यदि वरारोहा भृगोर्भार्य्या रहोगता ॥ २४ ॥ तथा सत्यं समाख्याहि जिहीर्षाम्याश्रमादिमाम्। स मन्युस्तत्र हृदयं प्रदहन्निव तिष्ठति। मत्पूर्वभार्य्यां यदिमां भृगुराप सुमध्यमाम् ॥२५॥

सौतिरुवाच। एवं रक्षस्तमामन्त्र्य ज्वलितं जातवेदसम्। शंकमानो भृगोर्भार्य्यां पुनः पुनरपृच्छत ॥ २६ ॥ त्वमग्ने सर्वभूतानामन्तश्चरसि नित्यदा। साक्षिवत् पुण्यपापेषु सत्यं ब्रूहि कवे वचः ॥ २७ ॥ मत्पूर्वापहृता भार्य्या भृगुणानृतकारिणा। सेयं यदि तथा मे त्वं सत्यमाख्यातुमर्हसि ॥ २८ ॥ श्रुत्वा त्वत्तो भृगोर्भार्य्यां हरिष्याम्याश्रमादिमाम्। जातवेदः पश्यतस्ते वद सत्यां गिरं मम ॥ २९ ॥

सूत उवाच। तस्यैतद्वचनं श्रुत्वा सप्तार्च्चिर्दुःखितोऽभवत्। भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ॥ ३० ॥

अग्निरुवाच। त्वया वृता पुलोमेयं पूर्वं दानवनन्दन। किं त्वियं विधिना पूर्वं मन्त्रवन्न वृता त्वया ॥ ३१ ॥ पित्रा तु

भृगवे दत्ता पुलोमेयं यशस्विनी। प्रदत्ता न तु वै तुभ्यं वरलो-
भाच्चिकीर्षया:॥ ३२॥ अथेमां वेददृष्टेन कर्मणा विधिपूर्वकम्।
भार्यामृषिर्भृगुः प्राप मां पुरस्कृत्य दानव॥ ३३॥ सेयमित्यव-
गच्छामि नानृतं वक्तुमुत्सहे। नानृतं हि सदा लोके पूज्यते
दानवोत्तम॥ ३४॥

इत्यादिपर्वणि पौलोमे पञ्चमोऽध्यायः॥ ५॥

---

सौतिरुवाच। अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम्।
ब्रह्मन् वराहरूपेण मनोमारुतरंहसा॥१॥ ततः स गर्भो निवसन्
कुक्षौ भृगुकुलोद्वह। रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत्
॥२॥ तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम्। तद्रक्षो भस्मसाद्भूतं
पपात परिमुच्य ताम्॥ ३॥ सा तमादाय सुश्रोणी ससार
भृगुनन्दन। च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता॥ ४॥
तां ददर्श स्वयं ब्रह्मा सर्वलोकपितामहः। रुदतीं वाष्पपूर्णाक्षीं
भृगोर्भार्यामनिन्दिताम्॥ ५॥ सान्त्वयामास भगवान् वधूं ब्रह्मा
पितामहः। अश्रुविन्दूद्भवा तस्याः प्रावर्त्तत महानदी॥ ६॥
अनुवर्त्मायिता तस्या भृगोः पत्न्यास्तपस्विनः। तस्या मार्गं सृतवतीं
दृष्ट्वा तु सरितं तदा॥७॥ नाम तस्यास्तदा नद्याश्चक्रे लोकपिता-
महः। वधूसरेति भगवांश्च्यवनस्याश्रमं प्रति॥ ८॥ स एवं च्यवनो
जज्ञे भृगोः पुत्रः प्रतापवान्। तं ददर्श पिता तत्र च्यवनं ताञ्च
भाविनीम्। स पुलोमां ततो भार्यां पप्रच्छ कुपितो भृगुः॥९॥

भृगुरुवाच। केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षते।
न हि त्वां वेद तद्रक्षो मद्भार्यां चारुहासिनि॥ १०॥ तत्त्व-
माख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा। विभेति को न
शापान्मे कस्य चायं व्यतिक्रमः॥ ११॥

ऋतौ दारांश्च गच्छन्ति तत्तथा भरतर्षभ। ततो वर्द्धन्त धर्म्मेण सहस्रशतजीविनः ॥ ११ ॥ ताः प्रजाः पृथिवीपाल धर्म्मव्रतपरायणाः। आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्व्वशो नराः ॥ १२ ॥ अथेमां सागरापाङ्गीं गाङ्गजेन्द्रगताखिलाम्। अध्यतिष्ठत् पुनः क्षत्र सशैलवनपत्तनाम् ॥ १३ ॥ प्रशासति पुनः क्षत्रे धर्म्मेणेमां वसुन्धराम्। ब्राह्मणाद्यास्ततो वर्णा लेभिरे मुदमुत्तमाम् ॥ १४ ॥ कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः। धर्म्मेण दण्डं दण्ड्येषु प्रणयन्तोऽन्वपालयन् ॥ १५ ॥ तथा धर्म्मपरे क्षत्रे सहस्राक्षः शतक्रतुः। स्वादु देशे च काले च वर्षेणापालयत् प्रजाः ॥ १६ ॥ न बाल एव म्रियते तदा कश्चिज्जनाधिप। न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः ॥ १७ ॥ एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ। इयं सागरपर्य्यन्ता समापूर्य्यत मेदिनी ॥ १८ ॥ ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः। साङ्गोपनिषदान् वेदान् विप्राश्चाधीयते तदा ॥ १९ ॥ न च विक्रीणते ब्रह्म ब्राह्मणाश्च तदा नृप। न च शूद्रसमाभ्यासे वेदानुच्चारयन्त्युत ॥ २० ॥ कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह। युञ्जते धुरि नो गाश्च कृशाङ्गांश्चाप्यजीवयन् ॥ २१ ॥ फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः। न कूटमानैर्वणिजः पण्यं विक्रीणते तदा ॥ २२ ॥ कर्म्माणि च नरव्याघ्र धर्म्मोपेतानि मानवा। धर्म्ममेवानुपश्यन्तश्चक्रुर्द्धर्म्मपरायणाः ॥ २३ ॥ स्वकर्म्मनिरताश्चासन् सर्व्वे वर्णा नराधिप। एवं तदा नरव्याघ्र धर्म्मो न ह्रसते क्वचित् ॥ २४ ॥ काले गावः प्रसूयन्ते नार्य्यश्च भरतर्षभ। भवन्त्यृतुषु वृक्षाणां पुष्पाणि च फलानि च ॥ २५ ॥ एवं कृतयुगे सम्यग्वर्त्तमाने तदा नृप। आपूर्य्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम् ॥ २६ ॥ एवं समुदिते लोके मानुषे भरतर्षभ। असुरा जज्ञिरे क्षेत्रे राज्ञान्तु मनुजेश्वर ॥ २७ ॥ आदि-

स्त्वैर्हि तदा दैत्या बहुशो निर्ज्जिता युधि । ऐश्वर्य्याद्भ्रंशितास्स्वर्गात्संबभूवुः क्षिताविह ॥ २८ ॥ इह देवत्वमिच्छन्तो मानुषेषु मनस्विनः । जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ॥ २९ ॥ गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च । क्रव्यात्सु चैव भूतेषु गजेषु च मृगेषु च ॥ ३० ॥ जातैरिह महीपाल जायमानैश्च तैर्मही । न शशाकात्मनात्मानमियं धारयितुं धरा ॥ ३१ ॥ अथ जाता महीपालाः केचिद्बहुमदान्विताः । दितेः पुत्रा दनोश्चैव तदा लोक इहाच्युताः ॥ ३२ ॥ वीर्य्यवन्तोऽवलिप्तास्ते नानारूपधरा महीम् । इमां सागरपर्य्यन्तां परीयुररिमर्द्दनाः ॥ ३३ ॥ ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैवाप्यपीड़यन् । अन्यानि चैव सत्त्वानि पीड़यामासुरोजसा ॥ ३४ ॥ त्रासयन्तोऽभिनिघ्नन्तः सर्वभूतगणांश्च ते । विचेरुः सर्वशो राजन्महीं शतसहस्रशः ॥ ३५ ॥ आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः । अब्रह्मण्या वीर्य्यमदा मत्ता मदबलेन च ॥ ३६ ॥ एवं वीर्य्यबलोत्सिक्तैर्भूरियत्नैर्महासुरैः । पीड्यमाना मही राजन् ब्रह्माणमुपचक्रमे ॥ ३७ ॥ न ह्यमी भूतसत्त्वौघाः पन्नगाः सनगां महीम् । तदा धारयितुं शेकुः संक्रान्तां दानवैर्बलात् ॥ ३८ ॥ ततो मही महीपाल भारार्त्ता भयपीड़िता । जगाम शरणं देवं सर्वभूतपितामहम् ॥ ३९ ॥ सा संवृतं महाभागैर्देवद्विजमहर्षिभिः । ददर्श देवं ब्रह्माणं लोककर्त्तारमव्ययम् ॥ ४० ॥ गन्धर्वैरप्सरोभिश्च देवकर्मसु निष्ठितैः । विद्यमानं मुदोपेतैर्ववन्दे चैनमेत्य सा ॥ ४१ ॥ अथ विज्ञापयामास भूमिस्तं शरणार्थिनी । सन्निधौ लोकपालानां सर्वेषामेव भारत ॥ ४२ ॥ तत् प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयम्भुवः । पूर्वमेवाभवद्राजन् विदितं परमेष्ठिनः ॥ ४३ ॥ स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत । सुरासुरलोकानामशेषेण मनोगतम् ॥ ४४ ॥

तामुवाच महाराज भूमिं भूमिपतिः प्रभुः। प्रभवः सर्व्वभूताना-मीशः शम्भुः प्रजापतिः॥ ४५॥

ब्रह्मोवाच। यदर्थमसि संप्राप्ता मत्सकाशं वसुन्धरे। तदर्थं सन्नियोच्यामि सर्वानेव दिवौकसः॥ ४६॥

वैशम्पायन उवाच। इत्युक्त्वा स महीं देवो ब्रह्मा राजन् विसृज्य च। आदिदेश तदा सर्वान् विबुधान् भूतकृत् स्वयम् ॥ ४७॥ अस्या भूमेर्निरसितुं भारं भागैः पृथक् पृथक्। अस्या-मेव प्रसूयध्वं विरोधायेति चाब्रवीत्॥ ४८॥ तथैव च समा-नीय गन्धर्वाप्सरसां गणान्। उवाच भगवान् सर्वानिदं वचन-मर्थवत्॥ ४९॥

ब्रह्मोवाच। स्वैः स्वैरंशैः प्रसूयध्वं यथेष्टं मानुषेषु च। अथ शक्रादयः सर्वे श्रुत्वा सुरगुरोर्वचः। तथ्यमर्थ्यञ्च पथ्यञ्च तस्य ते जगृहुस्तदा॥ ५०॥ अथ ते सर्व्वशोऽंशैः स्वैर्गन्तुं भूमिं कृत-क्षणाः। नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः॥ ५१॥ यः स चक्रगदापाणिः पीतवासाः शितिप्रभः। पद्मनाभः सुरारिघ्नः पृथुवक्षाञ्चितेक्षणः॥ ५२॥ प्रजापतिपतिर्देवः सुरनाथो महा-बलः। श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः॥ ५३॥ तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम्। अंशेनावतरेत्येवं तथे-त्याह च तं हरिः॥ ५४॥

इत्यादिपर्वण्यादिवंशावतरणपर्वणि चतुःषष्टोऽध्यायः॥ ६४॥

समाप्तञ्चेदमादिवंशावतारणपर्व॥

---

## अथ सम्भवपर्व्व ।

वैशम्पायन उवाच । अथ नारायणेनेन्द्रश्चकार सह सम्विदम् । अवतर्त्तुं मही स्वर्गादंशतः सहितः सुरैः ॥ १ ॥ आदिश्य च स्वयं शक्रः सर्व्वानेव दिवौकसः । निर्ज्जगाम पुनस्तस्मात् क्षया-न्नारायणस्य ह ॥ २ ॥ तेऽमरारिविनाशाय सर्व्वलोकहिताय च । अवतेरुः क्रमेणैव महीं स्वर्गाद्दिवौकसः ॥ ३ ॥ ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च । जज्ञिरे राजशार्दूल यथा-कामं दिवौकसः ॥ ४ ॥ दानवान् राक्षसांश्चैव गन्धर्व्वान् पन्नगां-स्तथा । पुरुषादानि चान्यानि जघ्नुः सत्त्वान्यनेकशः ॥ ५ ॥ दानवा राक्षसाश्चैव गन्धर्व्वाः पन्नगास्तथा । न तान् बलस्थान् बाल्येऽपि जघ्नुर्भरतसत्तम ॥ ६ ॥

जनमेजय उवाच । देवदानवसङ्घानां गन्धर्व्वाप्सरसां तथा । मानवानाञ्च सर्व्वेषां तथा वै यक्षरक्षसाम् ॥ ७ ॥ श्रोतुमिच्छामि तत्त्वेन सम्भवं कृत्स्नमादितः । प्राणिनाञ्चैव सर्व्वेषां सम्भवं वक्तु-मर्हसि ॥ ८ ॥

वैशम्पायन उवाच । हन्त ते कथयिष्यामि नमस्कृत्य स्वय-म्भुवे । सुरादीनामहं सम्यक् लोकानां प्रभवाप्ययम् ॥ ९ ॥ ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः । मरीचिरत्र्यङ्गि-रसौ पुलस्त्यः पुलहः क्रतुः ॥ १० ॥ मरीचेः कश्यपः पुत्रः कश्य-पात्तु इमाः प्रजाः । प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥ ११ ॥ अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा । क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः ॥ १२ ॥ कद्रूश्च मनुजव्याघ्र दक्षकन्यैव भारत । एतासां वीर्य्यसम्पन्नं पुत्रपौत्र-मनन्तकम् ॥ १३ ॥ अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः । ये राजन्नामतस्तांस्ते कीर्त्तयिष्यामि भारत ॥ १४ ॥ धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव च । भगो विवस्वान् पूषा च

सविता दशमस्तथा ॥ १५ ॥ एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते । जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः ॥ १६ ॥ एक एव दितेः पुत्रो हिरण्यकशिपुः स्मृतः । नाम्ना ख्यातास्तु तस्येमे पञ्च पुत्रा महात्मनः ॥ १७ ॥ प्रह्लादः पूर्व्वजस्तेषां संह्लादस्तदनन्तरम् । अनुह्लादस्तृतीयोभूत्तस्माच्च शिबिवाष्कलौ ॥ १८ ॥ प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्व्वत्र भारत । विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत ॥ १९ ॥ विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान् । बलेश्च प्रथितः पुत्रो वाणो नाम महासुरः ॥ २० ॥ रुद्रस्यानुचरः श्रीमान्महाकालेति यं विदुः । चत्वारिंशद्दनोः पुत्राः ख्याताः सर्व्वत्र भारत ॥ २१ ॥ तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः । शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः ॥ २२ ॥ असिलोमा च केशी च दुर्ज्जयश्चैव दानवः । अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्य्यवान् ॥ २३ ॥ तथा गगनमूर्द्धा च वेगवान् केतुमांश्च सः । स्वर्भानुरश्वोऽश्वपतिर्वृषपर्व्वाजकस्तथा ॥ २४ ॥ अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः । एकपादेकचक्रश्च विरूपाक्षमहोदरौ ॥ २५ ॥ निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा । शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा ॥ २६ ॥ एते ख्याता दनोर्व्वंशे दानवाः परिकीर्त्तिताः । अन्यौ तु खलु देवानां सूर्य्याचन्द्रमसौ स्मृतौ ॥ २७ ॥ अन्यौ दानवमुख्यानां सूर्य्याचन्द्रमसौ तथा । इमे च वंशाः प्रथिताः सत्त्ववन्तो महाबलाः ॥ २८ ॥ दनुपुत्रा महाराज दशदानववंशजाः । एकाक्षोऽमृतपो वीरः प्रलम्बनरकावपि ॥ २९ ॥ वातापी शत्रुतपनः शठश्चैव महासुरः । गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः ॥ ३० ॥ असंख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत । सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्क्कमर्द्दनम् ॥ ३१ ॥ सुचन्द्रं चन्द्रहन्तारं तथा चन्द्रप्रमर्द्दनम् । क्रूरस्वभावं क्रूरायाः पुत्र-

पौत्रमनन्तकम् ॥ ३२ ॥ गणः क्रोधवशो नाम क्रूरकर्मारिमर्द्दनः। दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः ॥ ३३ ॥ विक्षरो बलवीरौ च वृत्रश्चैव महासुरः। कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः ॥ ३४ ॥ प्रविख्याता महावीर्य्या दानवेषु परन्तपाः। विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च ॥ ३५ ॥ क्रोधः शत्रुस्तथैवान्ये कालकेया इति श्रुताः। असुराणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत् ॥ ३६ ॥ ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः। त्वष्टा धरस्तथात्रिश्च द्वावन्यौ रौद्रकर्म्मिणौ ॥ ३७ ॥ तेजसा सूर्य्यसङ्काशा ब्रह्मलोकपरायणाः। इत्येष वंशप्रभवः कथितस्ते तरस्विनाम् ॥ ३८ ॥ असुराणां सुराणाञ्च पुराणे संश्रुतो मया। एतेषां यदपत्यन्तु न शक्यं तदशेषतः ॥ ३९ ॥ प्रसंख्यातुं महीपाल गुणभूतमनन्तकम्। तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुड़ारुणौ ॥ ४० ॥ आरुणिर्वारुणिश्चैव वैनतेयाः प्रकीर्त्तिताः। शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः ॥ ४१ ॥ कूर्म्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्त्तिताः। भीमसेनोग्रसेनौ च सुपर्णौ वरुणस्तथा ॥ ४२ ॥ गोपतिर्धृतराष्ट्रश्च सूर्य्यवर्च्चाश्च सप्तमः। सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः ॥ ४३ ॥ भीमश्चित्ररथश्चैव विख्यातः सर्व्वविद्वशी। तथा शालिशिरा राजन् पर्ज्जन्यश्च चतुर्द्दशः ॥ ४४ ॥ कलिः पञ्चदशस्तेषां नारदश्चैव षोड़शः। इत्येते देवगन्धर्व्वा मौनेयाः परिकीर्त्तिताः ॥ ४५ ॥ अथ प्रसूतान्यन्यानि कीर्त्तयिष्यामि भारत। अनवद्यां मनुं वंशामसुरां मार्गणप्रियाम् ॥ ४६ ॥ अनूपां सुभगां भासीमिति प्राधा व्यजायत। सिद्धः पूर्णश्च बर्ही च पूर्णायुश्च महायशाः ॥ ४७ ॥ ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः। विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा ॥ ४८ ॥ इत्येते देवगन्धर्व्वाः प्राधेयाः परिकीर्त्तिताः। इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् ॥ ४९ ॥

प्राधासूत महाभागा देवी देवर्षितः पुरा। अलम्बुषा मिश्रकेशी विद्युत्पर्णा तिलोत्तमा ॥ ५० ॥ अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा। केशिनी च सुबाहुश्च सुरता सुरजा तथा ॥ ५१ ॥ सुप्रिया चातिबाहुश्च विख्यातौ च हाहाहूहूः। तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ॥ ५२ ॥ अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा। अपत्यं कपिलायास्तु पुराणे परिकीर्त्तितम् ॥ ५३ ॥ इति ते सर्वभूतानां सम्भवः कथितो मया। यथावत् सम्परिख्यातो गन्धर्वाप्सरसां तथा ॥ ५४ ॥ भुजगानां सुपर्णानां रुद्राणां मरुतां तथा। गवाञ्च ब्राह्मणानाञ्च श्रीमतां पुण्यकर्मणाम् ॥ ५५ ॥ आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः। श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता ॥ ५६ ॥ इमन्तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणदेवसन्निधौ। अपत्यलाभं लभते स पुष्कलं श्रियं यशः प्रेत्य च शोभनाङ्गतिम् ॥ ५७ ॥

इत्यादिपर्वणि सम्भवपर्वख्यंशावतारणे पञ्चषष्टोऽध्यायः ॥ ६५ ॥



वैशम्पायन उवाच। ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः। एकादश सुताः स्थाणोः ख्याताः परमतेजसः ॥१ ॥ मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः। अजैकपादहिर्बुध्नः पिनाकी च परन्तपः ॥ २ ॥ दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः। स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः ॥ ३ ॥ मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। षड़ेते ब्रह्मणः पुत्राः वीर्य्यवन्तो महर्षयः ॥ ४ ॥ त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः। वृहस्पतिरुतथ्यश्च सम्वर्त्तश्च धृतव्रतः ॥ ५ ॥ अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप। सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ॥ ६ ॥ राक्षसाश्च पुलस्त्यस्य वानराः किन्नरा-

स्तथा। यचास्य मनुजव्याघ्र पुत्रास्तस्य च धीमतः ॥ ७ ॥ पुल-
हस्य सुता राजञ्छलभाः परिकीर्त्तिताः। सिंहाः किंपुरुषा
व्याघ्रा यचा ईहामृगास्तथा ॥ ८ ॥ क्रतोः क्रतुसमाः पुत्राः
पतङ्गसहचारिणः। विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः
॥ ९ ॥ दचस्त्वजायताङ्गुष्ठाद्दचिणाद्भगवानृषिः। ब्रह्मणः पृथिवी-
पाल शान्तात्मा सुमहातपाः ॥ १० ॥ वामादजायताङ्गुष्ठाद्भार्य्या
तस्य महात्मनः। तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः
॥ ११ ॥ ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः। पुत्रिकाः
स्थापयामास नष्टपुत्रः प्रजापतिः ॥ १२ ॥ ददौ स दश धर्माय
सप्तविंशतिमिन्दवे। दिव्येन विधिना राजन् कश्यपाय त्रयो-
दश ॥ १३ ॥ नामतो धर्मपत्न्यस्ताः कीर्त्त्यमाना निबोध मे।
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा ॥ १४ ॥ बुद्धि-
र्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश। द्वाराण्येतानि धर्मस्य
विहितानि स्वयम्भुवा ॥ १५ ॥ सप्तविंशति सोमस्य पत्न्यो लोकेषु
विश्रुताः। कालस्य नयने युक्ताः सोमपत्न्यः शुचिव्रताः ॥ १६ ॥
सर्वा नक्षत्रयोगिन्यो लोकयात्राविधानतः। पैतामहो मनु-
र्देवस्तस्य पुत्रः प्रजापतिः ॥ १७ ॥ तस्याष्टौ वसवः पुत्रास्तेषां
वक्ष्यामि विस्तरम्। धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः
॥ १८ ॥ प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः। धूम्रायास्तु
धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा ॥ १९ ॥ चन्द्रमास्तु मनस्विन्याः
श्वसायाः श्वसनस्तथा। रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुता-
शनः ॥ २० ॥ प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ। धरस्य
पुत्रो द्रविणो हुतहव्यवहस्तथा ॥ २१ ॥ ध्रुवस्य पुत्रो भगवान्
कालो लोकप्रकालनः। सोमस्य तु सुतो वर्चा वर्चस्वी येन
जायते ॥ २२ ॥ मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा।
अह्नः सुतस्तथा ज्योतिः शमः शान्तस्तथा मुनिः ॥ २३ ॥ अग्ने पुत्रः

कुमारस्तु श्रीमाञ्छरवनालयः । तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ॥ २४ ॥ कृत्तिकाभ्युपपत्तेश्च कार्त्तिकेय इति स्मृतः । अनिलस्य शिवा भार्य्या तस्याः पुत्रो मनोजवः ॥ २५ ॥ अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु । प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाथ देवलम् ॥ २६ ॥ द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ । वृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी ॥ २७ ॥ योगसक्ता जगत् कृत्स्नमसक्ता विचचार ह । प्रभासस्य तु भार्य्या सा वसूनामष्टमस्य च ॥ २८ ॥ विश्वकर्मा महाभागो जज्ञे शिल्पप्रजापतिः । कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वर्द्धकिः ॥ २९ ॥ भूषणानाञ्च सर्व्वेषां कर्त्ता शिल्पवतां वरः । यो दिव्यानि विमानानि त्रिदशानां चकार ह ॥ ३० ॥ मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः । पूजयन्ति च यं नित्यं विश्वकर्म्माणमव्ययम् ॥ ३१ ॥ स्तनन्तु दक्षिणं भित्वा ब्राह्मणो नरविग्रहः । निःसृतो भगवान्धर्म्मः सर्व्वलोकसुखावहः ॥ ३२ ॥ त्रयस्तस्य वराः पुत्राः सर्व्वभूतमनोहराः । शमः कामश्च हर्षश्च तेजसा लोकधारिणः ॥ ३३ ॥ कामस्य तु रतिर्भार्य्या शमस्य प्राप्तिरङ्गना । नन्दा तु भार्य्या हर्षस्य यासु लोकाः प्रतिष्ठिताः ॥ ३४ ॥ मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः । जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥ ३५ ॥ त्वाष्ट्री तु सवितुर्भार्य्या वड़वारूपधारिणी । असूयत महाभागा सान्तरीक्षेऽश्विनावुभौ ॥ ३६ ॥ द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप । तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः ॥ ३७ ॥ त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव । अन्वयं सम्प्रवक्ष्यामि पक्षैश्च कुलतो गणान् ॥ ३८ ॥ रुद्राणामपरः पक्षः साध्यानां मरुतां तथा । वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च ॥ ३९ ॥ वैनतेयस्तु गरुड़ो बलवानरुणस्तथा । वृहस्पतिश्च भगवानादित्ये-

श्चैव गच्छते ॥ ४० ॥ अश्विनौ गुह्यकान् विद्धि सर्वौषध्यस्तथा पशून्। एते देवगणा राजन् कीर्त्तितास्तेऽनुपूर्व्वशः ॥ ४१ ॥ यान् कीर्त्तयित्वा मनुजः सर्व्वपापैः प्रमुच्यते। ब्राह्मणो हृदयं भित्त्वा निःसृतो भगवान् भृगुः ॥ ४२ ॥ भृगोः पुत्त्रः कविर्विद्वां-ञ्छुक्रः कविसुतो ग्रहः। त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे भया-भयी ॥ ४३ ॥ स्वयम्भुवा नियुक्तः सन् भुवनं परिधावति। योगा-चार्य्यो महाबुद्धिर्दैत्यानामभवद्गुरुः। सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः ॥ ४४ ॥ तस्मिन्नियुक्ते विधिना योगक्षेमाय भार्गवे। अन्यमुत्पादयामास पुत्त्रं भृगुरनिन्दितम् ॥ ४५ ॥ च्यवनं दीप्ततपसं धर्म्मात्मानं यशस्विनम्। यः स रोषाच्च्युतो गर्भान्मातु-र्मोचाय भारत ॥ ४६ ॥ आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः। और्व्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥ ४७ ॥ महातेजा महावीर्य्यो बाल एव गुणैर्युतः। ऋचीकस्तस्य पुत्त्रस्तु जमदग्निस्ततोऽभवत् ॥ ४८ ॥ जमदग्नेस्तु चत्वार आसन् पुत्त्रा महात्मनः। रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः ॥४९ ॥ सर्व्व-शस्त्रेषु कुशलः क्षत्रियान्तकरो वशी। और्व्वस्यासीत् पुत्त्रशतं जमदग्निपुरोगमम् ॥ ५० ॥ तेषां पुत्त्रसहस्राणि बभूवुर्भुवि विस्तरः। द्वौ पुत्त्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् ॥ ५१ ॥ लोके धाता विधाता च यौ स्थितौ मनुना सह। तयोरेव स्वसा देवी लक्ष्मी पद्मगृहा शुभा ॥ ५२ ॥ तस्यास्तु मानसाः पुत्त्रास्तुरगा व्योमचारिणः। वरुणस्य भार्य्या या ज्येष्ठा शुक्राद्देवी व्यजायत ॥ ५३ ॥ तस्याः पुत्त्रं बलं विद्धि सुरां च सुरनन्दिनीम्। प्रजा-नामन्नकामानामन्योऽन्यपरिभक्षणात् ॥ ५४ ॥ अधर्म्मस्तत्र सञ्जातः सर्व्वभूतविनाशकः। तस्यापि निरृतिर्भार्य्या नैरृता येन राक्षसाः ॥ ५५ ॥ घोरास्तस्यास्त्रयः पुत्त्राः पापकर्म्मरताः सदा। भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा ॥ ५६ ॥ न तस्य भार्य्या

पुत्रो वा कश्चिदस्त्यन्तको हि सः। काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीम् ॥ ५७ ॥ ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः। उलूकान् सुषुवे काकी श्येनी श्येनान् व्यजायत ॥ ५८ ॥ भासी भासानजनयद्गृध्रांश्चैव जनाधिप। धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्व्वशः ॥ ५९ ॥ चक्रवाकांश्च भद्रा तु जनयामास सैव तु। शुकी च जनयामास शुकानेव यशस्विनी ॥ ६० ॥ कल्याणगुणसम्पन्ना सर्व्वलक्षणपूजिता। नव क्रोधवशा नारीः प्रजज्ञे क्रोधसम्भवाः ॥ ६१ ॥ मृगी च मृगमन्दा च हरी भद्रमना अपि। मातङ्गी त्वथ शार्द्दूली श्वेता सुरभिरेव च ॥ ६२ ॥ सर्व्वलक्षणसम्पन्ना सुरसा चैव भामिनी। अपत्यं तु मृगाः सर्व्वे मृग्या नरवरोत्तम ॥ ६३ ॥ ऋक्षाश्च मृगमन्दायाः सृमराश्च परन्तप। ततस्त्वैरावतं नागं जज्ञे भद्रमनाः सुतम् ॥ ६४ ॥ ऐरावतः सुतस्तस्या देवनागो महागजः। हर्य्याश्च हरयोऽपत्यं वानराश्च तरस्विनः ॥ ६५ ॥ गोलाङ्गलांश्च भद्रन्ते हर्य्याः पुत्रान् प्रचक्षते। प्रजज्ञे त्वथ शार्द्दूली सिंहान् व्याघ्रा-नशेषतः ॥ ६६ ॥ द्वीपिनश्च महासत्त्वान् सर्व्वानेव न संशयः। मातङ्ग्यपि च मातङ्गानपत्यानि नराधिप ॥ ६७ ॥ दिशां गजांस्तु श्वेताख्यां श्वेताजनयदाशुगान्। तथा दुहितरौ राजन् सुरभिर्व्वै व्यजायत ॥ ६८ ॥ रोहिणीं चैव भद्रा तु गन्धर्व्वीं तु यश-स्विनी। विमलामपि भद्रन्ते अनलामपि भारत ॥ ६९ ॥ रोहिण्यां जज्ञिरे गावो गन्धर्व्व्यां वाजिनः सुताः। सप्तपिण्ड-फलान् वृक्षाननलापि व्यजायत ॥ ७० ॥ अनलायाः शुकी पुत्री कङ्कस्तु सुरसासुतः। अरुणस्य भार्य्या श्येनी तु वीर्य्यवन्तौ महाबलौ ॥ ७१ ॥ सम्पातिं जनयामास वीर्य्यवन्तं जटायुषम्। सुरसाजनयन्नागान् कद्रूः पुत्रांस्तु पन्नगान् ॥ ७२ ॥ द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुड़ारुणौ। इत्येष सर्व्वभूतानां महता

मनुजाधिप । प्रभवः कीर्त्तितः सम्यङ्मया मतिमतां वर ॥ ७३ ॥ यं श्रुत्वा पुरुषः सम्यङ्मुक्तो भवति पाप्मनः । सर्वज्ञताञ्च लभते गतिमग्र्याञ्च विन्दति ॥ ७४ ॥

इत्यादिपर्वणि सम्भवपर्वण्यंशावतरणे षट्षष्टोऽध्यायः ॥ ६६ ॥

---

जनमेजय उवाच । देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम् । सिंहव्याघ्रमृगाणाञ्च पन्नगानां पतत्रिणाम् ॥ १ ॥ सर्वेषाञ्चैव भूतानां सम्भवं भगवन्नहम् । श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम् । जन्म कर्म च भूतानामेतेषामनुपूर्वशः ॥ २ ॥

वैशम्पायन उवाच । मानुषेषु मनुष्येन्द्र सम्भूता ये दिवौकसः । प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्वशः ॥ ३ ॥ विप्रचित्तिरितिख्यातो य आसीद्दानवर्षभः । जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः ॥ ४ ॥ दितेः पुत्रस्तु यो राजन् हिरण्यकशिपुः स्मृतः । स जज्ञे मानुषे लोके शिशुपालो नरर्षभ ॥ ५ ॥ संह्लाद इति विख्यातः प्रह्लादस्यानुजस्तु यः । स शल्य इति विख्यातो जज्ञे वाह्लीकपुङ्गवः ॥ ६ ॥ अनुह्लादस्तु तेजस्वी योऽभूत् ख्यातो जघन्यजः । धृष्टकेतुरिति ख्याताः स बभूव नरेश्वरः ॥ ७ ॥ यस्तु राजञ्छिविर्नाम दैतेयः परिकीर्त्तितः । द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः ॥ ८ ॥ वाष्कलो नाम यस्तेषामासीदसुरसत्तमः । भगदत्त इति ख्यातः स जज्ञे पुरुषर्षभ ॥ ९ ॥ अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्य्यवान् । तथा गगनमूर्द्धा च वेगवांश्चात्र पञ्चमः ॥ १० ॥ पञ्चैते जज्ञिरे राजन् वीर्य्यवन्तो महासुराः । कैकयेषु महात्मानः पार्थिवर्षभसत्तमाः ॥ ११ ॥ केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान् । अमितौजा इति ख्यातः सोग्रकर्मा नराधिपः ॥ १२ ॥ स्वर्भानुरिति

विख्यातः श्रीमान्यस्तु महासुरः । उग्रसेन इति ख्यात उग्रकर्मा नराधिपः ॥ १३ ॥ यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः । अशोको नाम राजाभून्महावीर्य्योऽपराजितः ॥ १४ ॥ तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः । दैतेयः सोऽभवद्राजा हार्द्दिक्यो मनुजर्षभः ॥ १५ ॥ वृषपर्व्वेति विख्यातः श्रीमान्यस्तु महासुरः । दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ १६ ॥ अजकस्त्ववरो राजन्य आसीद्वृषपर्व्वणः । स शाल्व इति विख्यातः पृथिव्यामभवन्नृपः ॥ १७ ॥ अश्वग्रीव इति ख्यातः सत्त्ववान्यो महासुरः । रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ १८ ॥ सूक्ष्मस्तु मतिमान् राजन् कीर्त्तिमान् यः प्रकीर्त्तितः । वृहद्रथ इति ख्यातः क्षितावासीत् स पार्थिवः ॥ १९ ॥ तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः । सेनाविन्दुरिति ख्यातः स बभूव नराधिपः ॥ २० ॥ इषुपो नाम यस्तेषामसुराणां बलाधिकः । नग्नजिन्नाम राजासीद्भुवि विख्यातविक्रमः ॥ २१ ॥ एकचक्र इति ख्यात आसीद्यस्तु महासुरः । प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ ॥ २२ ॥ विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः । चित्रधर्म्मेति विख्यातः क्षितावासीत् स पार्थिवः ॥ २३ ॥ हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः । सुबाहुरिति विख्यातः श्रीमानासीत्स पार्थिवः ॥२४॥ सुहरस्तु महातेजाः शत्रुपक्षक्षयङ्करः । वाह्लीको नाम राजा स बभूव प्रथितः क्षितौ ॥ २५ ॥ निचन्द्रश्चन्द्रवक्त्रस्तु य आसीदसुरोत्तमः । मुञ्जकेश इति ख्यातः श्रीमानासीत् स पार्थिवः ॥ २६ ॥ निकुम्भस्त्वजितः सङ्ख्ये महामतिरजायत । भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृतः ॥ २७ ॥ शरभो नाम यस्तेषां दैतेयानां महासुरः । पौरवो नाम राजर्षिः स बभूव नरोत्तमः ॥ २८ ॥ कुपथस्तु महावीर्य्यः श्रीमान् राजन्महासुरः ।

सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः ॥ २९ ॥ क्राथस्तु राजन् राजर्षिः क्षितौ जज्ञे महासुरः। पार्वतेय इति ख्यातः काञ्चनाचलसन्निभः ॥ ३० ॥ द्वितीयः शलभस्तेषामसुराणां बभूव ह। प्रह्लादो नाम वाह्लीकः स बभूव नराधिपः ॥ ३१ ॥ चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः। चन्द्रवर्मेति विख्यातः काम्बोजानां नराधिपः ॥३२॥ अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गवः। ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः ॥ ३३ ॥ मृतपा इति विख्यातो य आसीदसुरोत्तमः। पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम ॥ ३४ ॥ गरिष्ठस्तु महातेजा यः प्रख्यातो महासुरः। द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ३५ ॥ मयूर इति विख्यातः श्रीमान्यस्तु महासुरः। स विश्व इति विख्यातो बभूव पृथिवीपतिः ॥ ३६ ॥ सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः। कालकीर्त्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ३७ ॥ चन्द्रहन्तेति यस्तेषां कीर्त्तितः प्रवरोऽसुरः। शुनको नाम राजर्षिः स बभूव नराधिपः ॥ ३८ ॥ विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः। जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः ॥ ३९ ॥ दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः। काशिराजः स विख्यातः पृथिव्यां पृथिवीपते ॥ ४० ॥ ग्रहन्तु सुषुवे यन्तु सिंहिकार्केन्दुमर्द्दनम्। स क्राथ इति विख्यातो बभूव मनुजाधिपः ॥ ४१ ॥ अनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः। विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृतः ॥ ४२ ॥ द्वितीयो विक्षराद्यस्तु नराधिपः महासुरः। पाण्ड्यराष्ट्राधिप इति विख्यातः सोऽभवन्नृपः ॥ ४३ ॥ बलीन इति विख्यातो यस्त्वासीदसुरोत्तमः। पौण्ड्रमत्स्यक इत्येवं बभूव स नराधिपः ॥ ४४ ॥ वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः। मणिमान्नाम राजर्षिः स बभूव नराधिपः ॥ ४५ ॥ क्रोधहन्तेति यस्तस्य बभूवावरजो-

ऽसुरः । दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ॥ ४६ ॥
क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः । दण्डधार इति ख्यातः
सोऽभवन्मनुजर्षभः ॥ ४७ ॥ कालेयानान्तु ये पुत्रास्तेषामष्टौ
नराधिपाः । जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ॥ ४८ ॥
मगधेषु जयत्सेनस्तेषामासीत्स पार्थिवः । अष्टानाम्प्रवरस्तेषां
कालेयानां महासुरः ॥ ४९ ॥ द्वितीयस्तु ततस्तेषां श्रीमान्
हरिहरोपमः । अपराजित इत्येवं स बभूव नराधिपः ॥ ५० ॥
तृतीयस्तु महातेजा महामायो महासुरः । निषादाधिपति-
र्जज्ञे भुवि भीमपराक्रमः ॥ ५१ ॥ तेषामन्यतमो यस्तु चतुर्थः
परिकीर्त्तितः । श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः
॥ ५२ ॥ पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुरः । महौजा
इति विख्यातो बभूवेह परन्तपः ॥ ५३ ॥ षष्ठस्तु मतिमान्यो
वै तेषामासीन्महासुरः । अभीरुरिति विख्यातः क्षितौ राजर्षि-
सत्तमः ॥ ५४ ॥ समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात् । विश्रुतः
सागरान्तायां क्षितौ धर्म्मार्थतत्त्ववित् ॥ ५५ ॥ बृहन्नामाष्टम-
स्तेषां कालेयानां नराधिप । बभूव राजा धर्म्मात्मा सर्व्वभूतहिते
रतः ॥ ५६ ॥ कुक्षिस्तु राजन् विख्यातो दानवानां महाबलः ।
पार्व्वतीय इति ख्यातः काञ्चनाचलसन्निभः ॥ ५७ ॥ क्रथनश्च
महावीर्य्यः श्रीमान्राजन्महासुरः । सूर्य्याक्ष इति विख्यातः
क्षितौ जज्ञे महीपतिः ॥ ५८ ॥ असुराणान्तु यः सूर्य्यः श्रीमां-
श्चैव महासुरः । दरदो नाम बाह्लीको वरः सर्व्वमहीक्षिताम्
॥ ५९ ॥ गणः क्रोधवशो नाम यस्ते राजन् प्रकीर्त्तितः ।
ततः सञ्जज्ञिरे वीराः क्षिताविह नराधिः ॥ ६० ॥ मद्रकः
कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा । सुवीरश्च सुबाहुश्च महावीरोऽथ
वाह्लिकः ॥ ६१ ॥ क्रथो विचित्रः सुरथः श्रीमान्नीलश्च भूमिपः ।
चीरवासाश्च कौरव्य भूमिपालश्च नामतः ॥ ६२ ॥ दन्तवक्रश्च

नमासीद्दुर्जयश्चैव दानवः। रुक्मी च नृपशार्दूलो राजा स जनमेजय ॥ ६३ ॥ आषाढो वायुवेगश्च भूरितेजास्तथैव च। एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः ॥ ६४ ॥ कारूषकाश्च राजानः क्षेमधूर्त्तिस्तथैव च। श्रुतायुरुद्दहश्चैव वृहत्सेनस्तथैव च ॥ ६५ ॥ क्षेमोग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः। मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः ॥ ६६ ॥ गणात् क्रोधवशादेष राजपूगोऽभवत् क्षितौ। जातः पुरा महाभागो महाकीर्त्तिर्महाबलः ॥ ६७ ॥ कालनेमिरिति ख्यातो दानावानां महाबलः। स कंस इति विख्यात उग्रसेनसुतो बली ॥ ६८ ॥ यस्त्वासीद्देवको नाम देवराजसमद्युतिः। स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः ॥ ६९ ॥ वृहस्पतेर्वृहत्कीर्त्तेर्देवर्षेर्विद्धि भारत। अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ॥ ७० ॥ धन्विनां नृपशार्दूल यः सर्वास्त्रविदुत्तमः। महाकीर्त्तिर्महातेजाः स जज्ञे मनुजेश्वरः ॥ ७१ ॥ धनुर्वेदे च वेदे च यं तं वेदविदो विदुः। वरिष्ठं चित्रकर्माणं द्रोणं स्वकुलवर्द्धनम् ॥ ७२ ॥ महादेवान्तकाभ्याञ्च कामात् क्रोधाच्च भारत। एकत्वमुपपन्नानां जज्ञे शूरः परन्तपः ॥ ७३ ॥ अश्वत्थामा महावीर्य्यः शत्रुपक्षक्षयावहः। वीरः कमलपत्राक्षः क्षितावासीन्नराधिप ॥ ७४ ॥ जज्ञिरे वसवस्त्वष्टौ गङ्गायां शान्तनोः सुताः। वशिष्ठस्य च शापेन नियोगाद्वासवस्य च ॥ ७५ ॥ तेषामवरजो भीष्मः कुरूणामभयङ्करः। मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः ॥ ७६ ॥ जामदग्न्येन रामेण सर्वास्त्रविदुषां वरः। योऽयुध्यत महातेजा भार्गवेण महात्मना ॥ ७७ ॥ यस्तु राजन् कृपो नाम ब्रह्मर्षिरभवत् क्षितौ। रुद्राणान्तु गणाद्विद्धि सम्भूतमतिपौरुषम् ॥ ७८ ॥ शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः। द्वापरं विद्धि तं राजन् सम्भूतमरिमर्द्दनम् ॥ ७९ ॥ सात्यकिः सत्यसन्धश्च योऽसौ

वृष्णिकुलोद्वहः। पश्चात्स जज्ञे मरुतां देवानामरिमर्द्दन ॥ ८० ॥
द्रुपदश्चैव राजर्षिस्तत एवाभवद्गणात्। मानुषे नृप लोके-
ऽस्मिन् सर्व्वशस्त्रभृतांवरः ॥ ८१ ॥ ततश्च कृतवर्म्माणं विद्धि
राजन् जनाधिपम्। तमप्रतिमकर्म्माणं क्षत्रियर्षभसत्तमम् ॥ ८२ ॥
मरुतान्तु गणाद्विद्धि सञ्जातमरिमर्द्दनम्। विराटं नाम राजानं
परराष्ट्रप्रतापनम् ॥ ८३ ॥ अरिष्टायास्तु यः पुत्रो हंस इत्यभि-
विश्रुतः। स गन्धर्व्वपतिर्ज्जज्ञे कुरुवंशविवर्द्धनः ॥ ८४ ॥ धृत-
राष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः। दीर्घबाहुर्म्महातेजा
प्रज्ञाचक्षुर्न्नराधिपः ॥ ८५ ॥ मातुर्दोषादृषेः कोपादन्ध एव
व्यजायत। तस्यैवावरजो भ्राता महासत्त्वो महाबलः। स पाण्डु-
रिति विख्यातः सत्यधर्म्मरतः शुचिः ॥ ८६ ॥ अत्रेस्तु सुमहा-
भागं पुत्रं पुत्रवतांवरम्। विदुरं विद्धि तं लोके जातं बुद्धि-
मतांवरम् ॥ ८७ ॥ कलेरंशस्तु सञ्जज्ञे भुवि दुर्य्योधनो नृपः।
दुर्ब्बुद्धिर्दुर्म्मतिश्चैव कुरूणामयशस्करः ॥ ८८ ॥ जगतो यस्तु
सर्व्वस्य विद्विष्टः कलिपूरुषः। यः सर्व्वां घातयामास पृथिवीं
पृथिवीपते ॥ ८९ ॥ उद्दीपितं येन वैरं भूतान्तकरणं महत्।
पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह ॥ ९० ॥ शतं दुःशा-
सनादीनां सर्व्वेषां क्रूरकर्म्मणाम्। दुर्म्मुखो दुःसहश्चैव ये चान्ये
नानुकीर्त्तिताः ॥ ९१ ॥ दुर्य्योधनसहायास्ते पौलस्त्या भरतर्षभ।
वैश्यापुत्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः ॥ ९२ ॥

जनमेजय उवाच। ज्येष्ठानुज्येष्ठतामेषां नामधेयानि वा
विभो। धृतराष्ट्रस्य पुत्राणामानुपूर्व्व्येण कीर्त्तय ॥ ९३ ॥

वैशम्पायन उवाच। दुर्य्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा।
दुःसहो दुःशलश्चैव दुर्म्मुखश्च तथा परः ॥ ९४ ॥ विविंशति-
र्विकर्णश्च जलसन्धः सुलोचनः। विन्दानुविन्दौ दुर्द्धर्षः सुबाहु-
र्दुष्प्रधर्षणः ॥ ९५ ॥ दुर्म्मर्षणो दुर्म्मुखश्च दुष्कर्णः कर्ण एव च।

नाम रूपेणासदृशी भुवि। पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्य्यवान्॥ १३०॥ अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा। अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया॥ १३१॥ अददत् कुन्तिभोजाय स तां दुहितरं तदा। सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने॥ १३२॥ उग्रम्पर्य्यचरद्घोरं ब्राह्मणं संशितव्रतम्। निगूढनिश्चयं धर्मे यन्तं दुर्वाससं विदुः॥ १३३॥ तमुग्रं शंसितात्मानं सर्वयत्नैरतोषयत्। तुष्टोऽभिचारसंयुक्तामाचचक्षे यथाविधि॥ १३४॥ उवाच चैनां भगवान् प्रीतोऽस्मि सुभगे तव। यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि॥ १३५॥ तस्य तस्य प्रसादात्त्वं देवि पुत्रान् जनिष्यसि। एवमुक्ता च सा बाला तदा कौतूहलान्विता॥ १३६॥ कन्या सती देवमर्कमाजुहाव यशस्विनी। प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ तदा॥ १३७॥ अजीजनत् सुतं चास्यां सर्वशस्त्रभृतां वरम्। सकुण्डलं सकवचं देवगर्भश्रियान्वितम्॥ १३८॥ दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषितम्। निगूहमाना जातं वै बन्धुपक्षभयात्तदा॥ १३९॥ उत्ससर्ज्ज जले कुन्ती तङ्कुमारं यशस्विनम्। तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः॥ १४०॥ राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा। चक्रतुर्न्नामधेयञ्च तस्य बालस्य तावुभौ॥ १४१॥ दम्पती वसुषेणेति दिक्षु सर्वासु विश्रुतम्। स वर्द्धमानो बलवान् सर्व्वास्त्रेषूत्तमोऽभवत्॥ १४२॥ वेदाङ्गानि च सर्वाणि जजाप जयतां वरः। यस्मिन् काले जपन्नास्ते धीमान् सत्यपराक्रमः॥ १४३॥ नादेयं ब्राह्मणेष्वासीत्तस्मिन् काले महात्मनः। तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः॥ १४४॥ ययाचे कुण्डले वीरं कवचञ्च सहाङ्गजम्। उत्कृत्य कर्णो ह्यददात् कवचं कुण्डले तथा॥ १४५॥ शक्तिं शक्रो ददौ तस्मै विस्मितश्चेदमब्रवीत्। देवासुरमनुष्याणां गन्धर्वो-

रगरचसाम् ॥ १४६ ॥ यस्मिन् चेपस्यसि दुर्द्धर्षं स एको न
भविष्यति । पुरा नाम च तस्यासीद्वसुषेण इति चितौ ॥ १४७ ॥
ततो वैकर्त्तनः कर्णः कर्मणा तेन सोऽभवत् । आमुक्तकवचो वीरो
यस्तु जज्ञे महायशाः ॥ १४८ ॥ स कर्ण इति विख्यातः पृथायाः
प्रथमः सुतः । स तु सूतकुले वीरो ववृधे राजसत्तम ॥ १४९ ॥
कर्णं नरवरश्रेष्ठं सर्वशस्त्रभृतां वरम् । दुर्य्योधनस्य सचिवं
मित्रं शत्रुविनाशनम् ॥ १५० ॥ दिवाकरस्य तं विद्धि जारन्नं-
शमनुत्तमम् । यस्तु नारायणो नाम देवदेवः सनातनः ॥ १५१ ॥
तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान् । शेषस्यांशश्च नागस्य
बलदेवो महाबलः ॥ १५२ ॥ सनत्कुमारं प्रद्युम्नं विद्धि राज-
न्महौजसम् । एवमन्ये मनुष्येन्द्रा बहवोंऽशा दिवौकसाम् ॥ १५३ ॥
जज्ञिरे वसुदेवस्य कुले कुलविवर्द्धनाः । गणस्त्वप्सरसां यो वै
मया राजन् प्रकीर्त्तितः ॥ १५४ ॥ तस्य भागः चितौ जज्ञे
नियोगाद्वासवस्य ह । तानि षोड़श देवीनां सहस्राणि नरा-
धिप ॥ १५५ ॥ बभूवुर्मानुषे लोके वासुदेवपरिग्रहाः । श्रियस्तु
भागः सञ्जज्ञे रत्यर्थं पृथिवीतले ॥ १५६ ॥ भीष्मकस्य कुले
साध्वी रुक्मिणी नाम नामतः । द्रौपदी त्वथ सञ्जज्ञे शची-
भागादनिन्दिता ॥ १५७ ॥ द्रुपदस्य कुले कन्या वेदिमध्यादनि-
न्दिता । नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी ॥ १५८ ॥
पद्मायताची सुश्रोणी स्वसिताञ्चितमूर्द्धजा । सर्वलक्षणसम्पन्ना
वैदूर्य्यमणिसन्निभा ॥ १५९ ॥ पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी
रहः । सिद्धिर्धृतिश्च ये देव्यौ पञ्चानाम्मातरौ तु ते ॥ १६० ॥
कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा । इति देवासुराणां
ते गन्धर्वाप्सरसां तथा ॥ १६१ ॥ अंशावतरणं राजन्राक्षसानाञ्च
कीर्त्तितम् । ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः ॥ १६२ ॥
महात्मानो यदूनाञ्च ये जाता विपुले कुले । ब्राह्मणाः चत्रिया

प्रतिमं मत्तवारणधूर्गतम्। द्विजक्षत्रियविट्शूद्रा निर्यान्तमनुजग्मिरे ॥ १३ ॥ ददृशुर्वर्द्धयानास्ते आशीर्भिश्च जयेन च। सुदूरमनुजग्मुस्तं पौरजानपदास्तथा ॥ १४ ॥ न्यवर्त्तन्त ततः पश्चादनुज्ञाता नृपेण ह। सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः ॥ १५ ॥ महीमापूरयामास घोषेण त्रिदिवं तथा। स गच्छन् ददृशे धीमान् नन्दनप्रतिमं वनम् ॥ १६ ॥ बिल्वार्क्कखदिराकीर्णं कपित्थधवसङ्कुलम्। विषमं पर्वतप्रस्थैरश्मभिश्च समावृतम् ॥ १७ ॥ निर्जलं निर्मनुष्यञ्च बहुयोजनमायतम्। मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ॥ १८ ॥ तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः। लोड़यामास दुष्मन्तः सूदयन् विविधान्मृगान् ॥ १९ ॥ वाणगोचरसम्प्राप्तांस्तत्र व्याघ्रगणान् बहून्। पातयामास दुष्मन्तो निर्बिभेद च सायकैः ॥ २० ॥ दूरस्थान् सायकैः कांश्चिदभिनत्स नराधिपः। अभ्यासमागतांश्चान्यान् खड्गेन निरकृन्तत ॥ २१ ॥ कांश्चिदेणान् समाजघ्ने शक्त्या शक्तिमतांवरः। गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः ॥ २२ ॥ तोमरैरसिभिश्चापि गदामुषलकम्पनैः। चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् ॥ २३ ॥ राज्ञाचाद्भुतवीर्य्येण योधैश्च समरप्रियैः। लोड्यमानं महारण्यं तत्यजुः स्म मृगाधिपाः ॥ २४ ॥ तत्र विद्रुतयूथानि हतयूथपतीनि च। मृगयूथान्यथौत्सुक्याच्छब्दञ्चक्रुस्ततस्ततः ॥ २५ ॥ शुष्काश्चापि नदीर्गत्वा जलनैराश्यकर्षिताः। व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ॥ २६ ॥ क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि। केचित्तत्र नरा व्याघ्रैरभक्ष्यन्त बुभुक्षितैः ॥ २७ ॥ केचिदग्निमथोत्पाद्य सं साध्यं च वनेचराः। भक्षयन्ति स्म मांसानि प्रकुटय विधिवत्तदा ॥ २८ ॥ तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः। सङ्कोच्याग्रकरान् भीताः प्रद्रवन्ति स्म वेगिताः ॥ २९ ॥ शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं

बहु । वन्या गजवरास्तत्र ममृदुर्मनुजान् बहून् ॥ ३० ॥ तद्वनं बलमेघेन शरधारेण सम्वृतम् । व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥ ३१ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने एकोन-सप्ततितमोऽध्यायः ॥ ६९ ॥

---

वैशम्पायन उवाच । ततो मृगसहस्राणि हत्वा सबल-वाहनः । राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥ १ ॥ एक एवोत्तमबलः क्षुत्पिपासाश्रमान्वितः । स वनस्यान्तमासाद्य मह-च्छून्यं समासदत् ॥ २ ॥ तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम् । मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥ ३ ॥ शीतमारुतसंयुक्तं जगामान्यन्महद्वनम् । पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥ ४ ॥ विपुलं मधुरारावैर्न्नादितं विहगैस्तथा । पुंस्कोकिल-निनादैश्च झिल्लीकगणनादितम् ॥ ५ ॥ प्रवृद्धविटपैर्व्वृक्षैः सुख-च्छायैः समावृतम् । षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम् ॥ ६ ॥ नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी । षट्-पदैर्न्नाप्यनाकीर्णस्तस्मिन् वै काननेऽभवत् ॥ ७ ॥ विहगैर्न्नादितं पुष्पैरलङ्कृतमतीव च । सर्व्वर्त्तुकुसुमैर्व्वृक्षैः सुखच्छायैः समा-वृतम् ॥ ८ ॥ मनोरमं महेष्वासो विवेश वनमुत्तमम् । मारुता-कुलितास्तत्र द्रुमाः कुसुमशालिनः ॥ ९ ॥ पुष्पवृष्टिं विचित्रान्तु व्यसृजंस्ते पुनः पुनः । दिवस्पृशोऽथ सङ्घुष्टाः पक्षिभिर्मधुर-स्वनैः ॥ १० ॥ विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः । तेषां तत्र प्रवालेषु पुष्पभारावनामिषु ॥ ११ ॥ रुवन्ति रावान्मधुरान् षट्पदा मधुलिप्सवः । तत्र प्रदेशांश्च बहून् कुसुमोत्करमण्डि-तान् ॥ १२ ॥ लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्द्धनान् । सम्प-

ष्यन् सुमहातेजा बभूव मुदितस्तदा ॥ १३ ॥ परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः। अशोभत वनं तत्तु महेन्द्रध्वजसन्निभैः ॥ १४ ॥ सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसाङ्गणैः। सेवितं वनमत्यर्थं मत्तवानरकिन्नरम् ॥ १५ ॥ सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः। परिक्रामन् वने वृक्षानुपैतीव रिरंसया ॥ १६ ॥ एवं गुणसमायुक्तं ददर्श स वनं नृपः। नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभम् ॥ १७ ॥ प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम्। आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ १८ ॥ नानावृक्षसमाकीर्णं सम्प्रज्वलितपावकम्। तं तदाप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत् ॥ १९ ॥ यतिभिर्वालिखिल्यैश्च वृतं मुनिगणान्वितम्। अग्न्यगारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ॥ २० ॥ महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च। मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम् ॥ २१ ॥ नैकपक्षिगणाकीर्णां तपोधनमनोरमाम्। तत्र व्यालमृगान् सौम्यान् पश्यन् प्रीतिमवाप सः ॥ २२ ॥ तं चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत। देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥ २३ ॥ नदीञ्चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः। सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥ २४ ॥ सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम्। सकिन्नरगणावासां वानरर्क्षनिषेविताम् ॥ २५ ॥ पुण्यस्वाध्यायसङ्घुष्टां पुलिनैरुपशोभिताम्। मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥ २६ ॥ तस्यास्तीरे भगवतः काश्यपस्य महात्मनः। आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥ २७ ॥ नदीमाश्रमसम्बद्धां दृष्ट्वाश्रमपदं तथा। चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥ २८ ॥ अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया। नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥ २९ ॥ मत्तबर्हिणसङ्घुष्टं प्रविवेश महद्वनम्। तत् चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥ ३० ॥

अतीवगुणसम्पन्नमनिर्द्देश्यञ्च वर्च्चसा। महर्षिं काश्यपं द्रष्टु-मथ कण्वं तपोधनम्॥ ३१॥ ध्वजिनीमश्वसम्बाधां पदातिगज-सङ्कुलाम्। अवस्थाप्य वनद्वारि सेनामिदमुवाच सः॥ ३२॥ मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम्। काश्यपं स्थीयता-मत्र यावदागमनं मम॥ ३३॥ तद्वनं नन्दनप्रख्यमासाद्य मनुजे-श्वरः। क्षुत्पिपासे जहौ राजा मुदं चावाप पुष्कलाम्॥ ३४॥ सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः। पुरोहितसहा-यश्च जगामाश्रममुत्तमम्॥ ३५॥ दिदृक्षुस्तत्र तमृषिं तपो-राशिमथाव्ययम्। ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य ह ॥ ३६॥ षट्पदोद्गीतसङ्घुष्टं नानाद्विजगणायुतम्। ऋचो बह्वृचमुख्यैश्च प्रेर्य्यमाणाः पदक्रमैः। शुश्राव मनुजव्याघ्रो विततेष्विह कर्म्मसु॥ ३७॥ यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम्। मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः॥ ३८॥ भारुण्डसामगीताभिरथर्व्वशिरसोद्गतैः। यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः॥ ३९॥ अथर्व्ववेदप्रवराः पूगयज्ञीयसामगाः। संहितामीरयन्ति स्म पदक्रमयुतां तु ते॥ ४०॥ शब्दसंस्कार-संयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः। नादितः स बभौ श्रीमान् ब्रह्मलोक इवापरः॥ ४१॥ यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः। न्यायतत्त्वात्मविज्ञानसम्पन्नैर्वेदपारगैः॥ ४२॥ नानावाक्यसमा-हारसमवायविशारदैः। विशेषकार्य्यविद्भिश्च मोक्षधर्म्मपरायणैः ॥ ४३॥ स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतांगतैः। शब्दच्छन्दो-निरुक्तज्ञैः कालज्ञानविशारदैः॥ ४४॥ द्रव्यकर्म्मगुणज्ञैश्च कार्य्यकारणवेदिभिः। कपिपक्षिरुतज्ञैश्च व्यासग्रन्थसमाश्रितैः ॥ ४५॥ नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम्। लोका-यतिकमुख्यैश्च समन्तादनुनादितम्॥ ४६॥ तत्र तत्र च विप्रेन्द्रा-न्नियतान् संशितव्रतान्। जपहोमपरान् विप्रान् ददर्श पर-

वीरहा ॥ ४७ ॥ आसनानि विचित्राणि रुचिराणि महीपतिः । प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागतः ॥ ४८ ॥ देवतायतनानाञ्च प्रेक्ष्य पूजा कृता द्विजैः । ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ ४९ ॥ स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् । नातृप्यत् प्रेक्षमाणो वै तपोवनगुणैर्युतम् ॥ ५० ॥ स काश्यपस्यायतनं महाव्रतैर्वृतं समन्तादृषिभिस्तपोधनैः । विवेश सामात्यपुरोहितोऽरिहा विविक्तमत्यर्थमनोहरं शुभम् ॥ ५१ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने सप्ततितमोऽध्यायः ॥ ७० ॥

---

वैशम्पायन उवाच । ततो गच्छन्महाबाहुरेकोऽमात्यान् विसृज्य तान् । नापश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥ १ ॥ सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तथाश्रमम् । उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ॥ २ ॥ श्रुत्वाथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी । निश्चक्रामाश्रमात्तस्मात्तापसीवेशधारिणी ॥ ३ ॥ सा तन्दृष्ट्वैव राजानं दुष्मन्तमसितेक्षणा । स्वागतन्त इति क्षिप्रमुवाच प्रतिपूज्य च ॥ ४ ॥ आसनेनार्च्चयित्वा च पाद्येनार्घ्येण चैव हि । पप्रच्छानामयं राजन् कुशलञ्च नराधिपम् ॥ ५ ॥ यथावदर्च्चयित्वाथ पृष्ट्वा चानामयं तदा । उवाच स्मयमानेव किङ्कार्य्यं क्रियतामिति ॥ ६ ॥ तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् । दृष्ट्वा चैवानवद्याङ्गीं यथावत् प्रतिपूजितः ॥ ७ ॥ आगतोऽहं महाभागमृषिं कण्वमुपासितुम् । क्व गतो भगवान् भद्रे तन्ममाचक्ष्व शोभने ॥ ८ ॥

शकुन्तलोवाच । गतः पिता मे भगवान् फलान्याहर्त्तुमाश्रमात् । मुहूर्त्तं सम्प्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥ ९ ॥

वैशम्पायन उवाच । अपश्यमानस्तमृषिं तथाचोक्तस्तया च सः । तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥ १० ॥ विभ्राजमानां वपुषा तपसा च दमेन च । रूपयौवनसम्पन्ना-मित्युवाच महीपतिः ॥ ११ ॥ का त्वं कस्यासि सुश्रोणि किमर्थं चागता वनम् । एवंरूपगुणोपेता कुतस्त्वमसि शोभने ॥ १२ ॥ दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः । इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥ १३ ॥ एवमुक्ता तु सा कन्या तेन राज्ञा तमाश्रमे । उवाच हसती वाक्यमिदं सुमधराक्षरम् ॥ १४ ॥ कण्वस्याहं भगवतो दुष्मन्त दुहिता मता । तपस्विनो धृतिमतो धर्मज्ञस्य महात्मनः ॥ १५ ॥

दुष्मन्त उवाच । ऊर्द्ध्वरेता महाभागो भगवान् लोक-पूजितः । चलेद्धि वृत्ताद्धर्म्मोऽपि न चलेच्छंसितव्रतः ॥ १६ ॥ कथं त्वं तस्य दुहिता सम्मता वरवर्णिनी । संशयो मे महानत्र तन्मे छेत्तुमिहार्हसि ॥ १७ ॥

शकुन्तलोवाच । यथायमागमो मह्यं यथाचेदमभूत् पुरा । शृणु राजन् यथातत्त्वं यथास्मि दुहिता मुनेः ॥ १८ ॥ ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् । तस्मै प्रोवाच भगवान् यथा तच्छृणु पार्थिव ॥ १९ ॥

कण्व उवाच । तप्यमानः किल पुरा विश्वामित्रो महत्तपः । सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥ २० ॥ तपसा दीप्त-वीर्य्योऽयं स्थानान्मां च्यावयेदिति । भीतः पुरन्दरस्तस्मान्मेनका-मिदमब्रवीत् ॥ २१ ॥ गुणैरप्सरसां दिव्यैर्मेनके त्वं विशिष्यसे । श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु ॥ २२ ॥ असा-वादित्यसङ्काशो विश्वामित्रो महातपाः । तप्यमानस्तपो घोरं मम कम्पयते मनः ॥ २३ ॥ मेनके तव भारोऽयं विश्वामित्रः सुमध्यमे । शंसितात्मा सुदुर्द्धर्ष उग्रे तपसि वर्त्तते ॥ २४ ॥

स मां न च्यवयेत् स्थानात्तं वै गत्वा प्रलोभय। चर तस्य तपोविघ्नं कुरु मेऽविघ्नमुत्तमम् ॥ २५ ॥ रूपयौवनमाधुर्य्यचेष्टितस्मितभाषितैः। लोभयित्वा वरारोहे तपसस्तं निवर्त्तय ॥ २६ ॥

मेनकोवाच। महातेजाः स भगवांस्तथैव च महातपाः। कोपनश्च तथा ह्येनं जानाति भगवानपि ॥ २७ ॥ तेजसस्तपसश्चैव कोपस्य च महात्मनः। त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥ २८ ॥ महाभागं वशिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत्। क्षत्रजातश्च यः पूर्वमभवद्ब्राह्मणो बलात् ॥ २९ ॥ शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलैः। यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ॥ ३० ॥ बभार यत्रास्य पुरा काले दुर्गे महात्मनः। दारान्मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ॥ ३१ ॥ अतीतकाले दुर्भिक्षे अभ्येत्य पुनराश्रमम्। मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ॥ ३२ ॥ मतङ्गं याजयाञ्चक्रे यत्र प्रीतमनाः स्वयम्। त्वञ्च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ॥ ३३ ॥ चकारान्यञ्च लोकं वै क्रुद्धो नक्षत्रसम्पदा। प्रतिश्रवणपूर्वाणि नक्षत्राणि चकार यः। गुरुशापहतस्यापि त्रिशङ्कोः शरणं ददौ ॥ ३४ ॥ एतानि यस्य कर्माणि तस्याहं भृशमुद्विजे। यथासौ न दहेत् क्रुद्धस्तथाज्ञापय मां विभो ॥ ३५ ॥ तेजसा निर्द्दहेल्लोकान् कम्पयेद्धरणीं पदा। संक्षिपेच्च महामेरुं तूर्णमावर्त्तयेद्दिशः ॥ ३६ ॥ तादृशं तपसा युक्तं प्रदीप्तमिव पावकम्। कथमस्मद्विधा नारी जितेन्द्रियमभिस्पृशेत् ॥ ३७ ॥ हुताशनमुखं दीप्तं सूर्य्यचन्द्राक्षितारकम्। कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ॥ ३८ ॥ यमश्च सोमश्च महर्षयश्च साध्या विश्वे वालिखिल्याश्च सर्वे। एतेऽपि यस्योद्विजन्ते प्रभावात्तस्मात् कस्मान्मादृशी नोद्विजेत ॥ ३९ ॥ त्वयैवमुक्ता च कथं समीपमृषेर्न गच्छेयमहं सुरेन्द्र। रक्षान्तु मे चिन्तय देवराज यथा त्वदर्थं

रक्षिताहं चरेयम्॥ ४०॥ कामन्तु मे मारुतस्तत्र वासः प्रक्रीडिताया विवृणोतु देव। भवेच्च मे मन्मथस्तत्र कार्य्ये सहायभूतस्तु तव प्रसादात्॥ ४१॥ वनाच्च वायुः सुरभिः प्रवायात्तस्मिन् काले तमृषिं लोभयन्त्याः। तथेत्युक्त्वा विहिते चैव तस्मिंस्ततो ययौ साश्रमं कौशिकस्य॥ ४२॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने एकसप्ततोऽध्यायः॥ ७१॥

---

कण्व उवाच। एवमुक्तस्तया शक्रः सन्दिदेश सदागतिम्। प्रातिष्ठत तदा काले मेनका वायुना सह॥ १॥ अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम्। विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे॥ २॥ अभिवाद्य ततः सा तं प्राक्रीड़दृषिसन्निधौ। अपोवाह च वासोऽस्या मारुतः शशिसन्निभम्॥ ३॥ सागच्छत्त्वरिता भूमिं वासस्तदभिलिप्सती। स्मयमानेव सव्रीड़ं मारुतं वरवर्णिनी॥ ४॥ पश्यतस्तस्य तत्रर्षेरप्यग्निसमतेजसः। विश्वामित्रस्ततस्तां तु विषमस्थामनिन्दिताम्॥ ५॥ गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः। अनिर्द्देश्यवयोरूपामपश्यद्विवृतां तदा॥ ६॥ तस्या रूपगुणान् दृष्ट्वा स तु विप्रर्षभस्तदा। चकार भावं संसर्गात्तया कामवशं गतः॥ ७॥ न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता। तौ तत्र सुचिरं कालमुभौ व्याहरतां तदा॥ ८॥ रममाणौ यथाकमं यथैकदिवसं तथा। जनयामास स मुनिर्म्मेनकायां शकुन्तलाम्॥ ९॥ प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम्। जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु॥ १०॥ कृतकार्य्या ततस्तूर्णमगच्छच्छक्रसंसदम्। तं वने विजने गर्भं सिंहव्याघ्रसमाकुले॥ ११॥ दृष्ट्वा शयानं शकुनाः

समन्तात् पर्य्यवारयन्। नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः॥ १२॥ पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम्। उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम्॥ १३॥ निर्ज्जने विपिने रम्ये शकुन्तैः परिवारिताम्। आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम्॥ १४॥ शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते। क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने॥ १५॥ निर्ज्जने तु वने यस्मात् शकुन्तैः परिपालिता। शकुन्तलेति नामास्याः कृतं चापि ततो मया॥ १६॥ एवं दुहितरं विद्धि मम विप्र शकुन्तलाम्। शकुन्तला च पितरं मन्यते मामनिन्दिता॥ १७॥

शकुन्तलोवाच। एतदाचष्ट पृष्टः सन्मम जन्म महर्षये। सुताङ्कण्वस्य मामेवं विद्धि त्वं मनुजाधिप॥ १८॥ कण्वं हि पितरं मन्ये पितरं स्वमजानती। इति ते कथितं राजन् यथा वृत्तं श्रुतं मया॥ १९॥

इत्यादिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्याने
द्विसप्ततोऽध्यायः॥ ७२॥

---

दुष्मन्त उवाच। सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे। भार्य्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते॥ १॥ सुवर्णमालां वासांसि कुण्डले परिहाटके। नानापत्तनजे शुभ्रे मणिरत्ने च शोभने॥ २॥ आहरामि तवाद्याहं निष्कादीन्यजिनानि च। सर्वराज्यं तवाद्यास्तु भार्य्या मे भव शोभने॥ ३॥ गान्धर्व्वेण च मां भीरु विवाहेनैहि सुन्दरि। विवाहानां हि रम्भोरु गान्धर्व्वः श्रेष्ठ उच्यते॥ ४॥

शकुन्तलोवाच। फलाहारो गतो राजन् पिता मे इत आश्रमात्। मुहूर्त्तं सम्प्रतीक्षस्व स मां तुभ्यं प्रदास्यति॥ ५॥

दुष्मन्त उवाच । इच्छामि त्वां वरारोहे भजमानामनिन्दिते । त्वदर्थं मां स्थितं विद्धि तद्गतं हि मनो मम ॥ ६ ॥ आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः । आत्मनैवात्मनो दानं कर्त्तुमर्हसि धर्मतः ॥ ७ ॥ अष्टावेव समासेन विवाहा धर्मतः स्मृताः । ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ ८ ॥ गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः । तेषां धर्म्यान्यथापूर्वं मनुः स्वायम्भुवोऽब्रवीत् ॥ ९ ॥ प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधारय । षड़ानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते ॥ १० ॥ राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः । पञ्चानान्तु त्रयो धर्म्या अधर्म्मौ द्वौ स्मृताविह ॥ ११ ॥ पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन । अनेन विधिना कार्य्यो धर्मस्यैषा गतिः स्मृता ॥ १२ ॥ गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः । पृथग्वा यदि वा मिश्रौ कर्त्तव्यौ नात्र संशयः ॥ १३ ॥ सा त्वं मम सकामस्य सकामा वरवर्णिनी । गान्धर्वेण विवाहेन भार्य्या भवितुमर्हसि ॥ १४ ॥

शकुन्तलोवाच । यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम । प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ १५ ॥ सत्यं मे प्रतिजानीहि यथा वक्ष्याम्यहं रहः । मयि जायेत यः पुत्रः स भवेत्त्वदनन्तरः ॥ १६ ॥ युवराजो महाराज सत्यमेतद्ब्रवीमि ते । यद्येतदेवं दुष्मन्त अस्तु मे सङ्गमस्त्वया ॥ १७ ॥

वैशम्पायन उवाच । एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् । अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥ १८ ॥ यथा त्वमर्हा सुश्रोणि सत्यमेतद्ब्रवीमि ते । एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ॥ १९ ॥ जग्राह विधिवत् पाणावुवास च तया सह । विश्वास्य चैनां स प्रायाद्ब्रवीच्च पुनः पुनः ॥ २० ॥ प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् । तया त्वानायिष्यामि निवासं स्वं शुचिस्मिते ॥ २१ ॥

वैशम्पायन उवाच। इति तस्याः प्रतिश्रुत्य स नृपो जनमे-
जय। मनसा चिन्तयन् प्रायात् काश्यपं प्रति पार्थिवः॥ २२॥
भगवांस्तपसा युक्तः श्रुत्वा किन्नु करिष्यति। एवं स चिन्तयन्नेव
प्रविवेश स्वकं पुरम्॥ २३॥ मुहूर्त्तयाते तस्मिंस्तु कण्वोऽप्या-
श्रममागमत्। शकुन्तला च पितरं ह्रिया नोपजगाम तम्॥ २४॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः। उवाच भग-
वान् प्रीतः पश्यन् दिव्येन चक्षुषा॥ २५॥ त्वयाद्य भद्रे रहसि
मामनादृत्य यः कृतः। पुंसा सह समायोगो न स धर्मोपघा-
तकः॥ २६॥ क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः॥ २८॥ धर्मात्मा च
महात्मा च दुष्मन्तः पुरुषोत्तमः। अभ्यगच्छः पतिं यत्त्वं भजमानं
शकुन्तले॥ २८॥ महात्मा जनिता लोके पुत्रस्तव महाबलः।
य इमां सागरापाङ्गीं कृत्स्नां भोक्ष्यति मेदिनीम्॥ २९॥ पर-
श्चाभिप्रयातस्य चक्रं तस्य महात्मनः। भविष्यत्यप्रतिहतं सततं
चक्रवर्त्तिनः॥ ३०॥ ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत्।
विनिधाय ततो भारं सन्निधाय फलानि च॥ ३१॥

शकुन्तलोवाच। मया पतिर्वृतो राजा दुष्मन्तः पुरुषो-
त्तमः। तस्मै ससचिवाय त्वं प्रसादं कर्त्तुमर्हसि॥ ३२॥

कण्व उवाच। प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि।
गृहाण च वरं मत्तस्त्वं शुभे यदभीप्सितम्॥ ३३॥

वैशम्पायन उवाच। ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं
तथा। शकुन्तला पौरवाणां दुष्मन्तहितकाम्यया॥ ३४॥

इत्यादिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्याने
त्रिसप्ततोऽध्यायः॥ ७३॥

---

वैशम्पायन उवाच। प्रतिज्ञाय तु दुष्मन्ते प्रतियाते शकुन्तला। गर्भं सुषाव वामोरुः कुमारममितौजसम् ॥ १ ॥ त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम्। रूपौदार्य्यगुणोपेतं दौष्मन्तिं जनमेजय ॥ २ ॥ जातकर्म्मादिसंस्कारं कण्वः पुण्यकृतांवरः। विधिवत् कारयामास वर्द्धमानस्य धीमतः ॥ ३ ॥ दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो महान्। चक्राङ्कितकरः श्रीमान्महामूर्द्धा महाबलः ॥ ४ ॥ कुमारो देवगर्भाभः स तत्राशु व्यवर्द्धत ॥ ४ ॥ षड्‌वर्ष एव बालः स कण्वाश्रमपदं प्रति। सिंहव्याघ्रान् वराहांश्च महिषांश्च गजांस्तथा। बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ॥ ५ ॥ आरोहन्दमयंश्चैव क्रीड़ंश्च परिधावति। ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः। अस्त्वयं सर्व्वदमनः सर्व्वं हि दमयत्यसौ ॥ ६ ॥ स सर्व्वदमनो नाम कुमारः समपद्यत। विक्रमेणौजसा चैव बलेन च समन्वितः ॥ ७ ॥ तं कुमारमृषिर्दृष्ट्वा कर्म्मचास्यातिमानुषम्। समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ॥ ८ ॥ तस्य तद्बलमाज्ञाय कण्वः शिष्याानुवाच ह। शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात्। भर्त्तुः प्रापयतागारं सर्व्वलक्षणपूजितम् ॥ ९ ॥ नारीणां चिरवासो हि बान्धवेषु न रोचते। कीर्त्तिचारित्रधर्म्मघ्नस्तस्मान्नयत मा चिरम् ॥ १० ॥ तथेत्युक्त्वा तु ते सर्व्वे प्रातिष्ठन्त महौजसः। शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥ ११ ॥ गृहीत्वामरगर्भाभं पुत्रं कमललोचनम। आजगाम ततः शुभ्रू दुष्मन्तं विदिताद्वनात् ॥ १२ ॥ अभिसृत्य च राजानं विदिता च प्रवेशिता। सह तेनैव पुत्रेण बालार्कसमतेजसा ॥ १३ ॥ निवेदयित्वा ते सर्व्वे आश्रमं पुनरागताः। पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला ॥ १४ ॥ अयं पुत्रस्त्वया राजन् यौवराज्येऽभिषिच्यताम्। त्वया ह्ययं सुतो राजन्मय्युत्पन्नः सुरोपमः। यथा-

समयमेतस्मिन् वर्त्तस्व पुरुषोत्तम॥ १५॥ यथा मत्सङ्गमे पूर्वं यः कृतः समयस्त्वया। तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति ॥ १६॥ सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि। अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि ॥ १७॥ धर्मकामार्थसम्बन्धं न स्मरामि त्वया सह। गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत् कुरु ॥ १८॥ सैवमुक्ता वरारोहा व्रीड़ितेव तपस्विनी। निःसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला॥ १९॥ संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा। कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत॥ २०॥ आकारं गूहमाना च मन्युना च समीरिता। तपसा सम्भृतं तेजो धारयामास वै तदा॥ २१॥ सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता। भर्त्तारमभिसम्प्रेक्ष्य क्रुद्धा वचनमब्रवीत्॥ २२॥ जानन्नपि महाराज कस्मादेवं प्रभाषसे। न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः॥ २३॥ अत्र ते हृदयं वेद सत्यस्यैवानृतस्य च। कल्याणं वद साक्ष्येण मात्मानमवमन्यथाः॥ २४॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा॥ २५॥ एकोऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम्। यो वेदिता कर्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि॥ २६॥ मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति। विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः॥ २७॥ आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥ २८॥ यमो वैवस्वतस्तस्य निर्य्यातयति दुष्कृतम्। हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति॥ २९॥ न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः। तं यमः पापकर्म्माणं विघातयति दुष्कृतम्॥ ३०॥ योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते। न तस्य देवाः श्रेयांसो यस्यात्मापि

न कारणम् ॥ ३१ ॥ स्वयं प्राप्तेति मामेवं मावमंस्था पति-
व्रताम् । अर्घार्हां नार्चयसि मां स्वयं भार्य्यामुपस्थिताम् ॥ ३२ ॥
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि । न खल्वहमिदं शून्ये
रौमि किं न शृणोषि मे ॥ ३३ ॥ यदि मे याचमानाया वचनं
न करिष्यसि । दुष्मन्त शतधा मूर्द्धा ततस्तेऽद्य स्फुटिष्यति ॥ ३४ ॥
भार्य्यां पतिः सम्प्रविश्य स यस्माज्जायते पुनः । जायायास्तद्धि
जायात्वं पौराणाः कवयो विदुः ॥ ३५ ॥ यदागमवतः पुंस-
स्तदपत्यं प्रजायते । तत्तारयति सन्तत्या पूर्वप्रेतान् पितामहान्
॥ ३६ ॥ पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र
इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ३७ ॥ पुत्रेण लोकान् जयति
पौत्रेणानन्त्यमश्नुते । अथ पौत्रस्य पुत्रेण मोदन्ते प्रपिता-
महाः ॥ ३८ ॥ सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजा-
वती । सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता
॥ ३९ ॥ अर्द्धं भार्य्या मनुष्यस्य भार्य्या श्रेष्ठतमः सखा । भार्य्या
मूलं त्रिवर्गस्य भार्य्या मूलं तरिष्यतः ॥ ४० ॥ भार्य्यावन्तः
क्रियावन्तः सभार्य्या गृहमेधिनः । भार्य्यावन्तः प्रमोदन्ते
भार्य्यावन्तः श्रियान्विताः ॥ ४१ ॥ सखायः प्रविविक्तेषु भव-
न्त्येताः प्रियम्वदाः । पितरो धर्मकार्य्येषु भवन्त्यार्त्तस्य मातरः
॥ ४२ ॥ कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै । यः
सदारः स विश्वास्यस्तस्माद्दाराः पराः गतिः ॥ ४३ ॥ संसरन्त-
मपि प्रेतं विषमेष्वेकपातिनम् । भार्य्यैवान्वेति भर्त्तारं सततं
या पतिव्रता ॥ ४४ ॥ प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रती-
क्षते । पूर्वं मृतञ्च भर्त्तारं पश्चात् साध्व्यनुगच्छति ॥ ४५ ॥ एत-
स्मात् कारणाद्राजन् पाणिग्रहणमिष्यते । यदाप्नोति पतिर्भार्य्या-
मिह लोके परत्र च ॥ ४६ ॥ आत्मात्मनैव जनितः पुत्रः इत्यु-
च्यते बुधैः । तस्माद्भार्य्यां नरः पश्येन्मातृवत् पुत्रमातरम् ॥ ४७ ॥

भार्य्यायां जनितं पुत्रमादर्शेष्विव चाननम् । ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ४८ ॥ दह्यमाना मनोदुःखै-र्व्याधिभिश्चातुरा नराः । ह्लादन्ते स्वेषु दारेषु घर्मार्त्ताः सलिलेष्विव ॥ ४९ ॥ सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः । रतिं प्रीतिञ्च धर्मञ्च तास्वायत्तमवेक्ष्य हि ॥ ५० ॥ आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् । ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाम् ॥ ५१ ॥ प्रतिपद्य यदा सूनु-र्धरणीरेणुगुण्ठितः । पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः ॥ ५२ ॥ स त्वं स्वयमभिप्राप्तं साभिलाषमिमं सुतम् । प्रेक्ष-माणं कटाक्षेण किमर्थमवमन्यसे ॥ ५३ ॥ अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः । न भरेथाः कथन्नु त्वं धर्मज्ञः सन् स्वमात्मजम् ॥ ५४ ॥ न वाससां न रामाणां नापां स्पर्श-स्तथाविधः । शिशोरालिङ्ग्यमानस्य स्पर्शः सुनोर्यथा सुखः ॥ ५५ ॥ ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम् । गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥ ५६ ॥ स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः । पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ॥ ५७ ॥ त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिन्दम । इमं कुमारं राजेन्द्र तव शोकविनाशनम् ॥ ५८ ॥ आहर्त्ता वाजिमेधस्य शतसङ्ख्यस्य पौरव । इति वागन्तरीक्षे मां सूतकेऽभ्यवदत् पुरा ॥ ५९ ॥ ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः । मूर्द्ध्नि पुत्रानुपा-घ्राय प्रतिनन्दन्ति मानवाः ॥ ६० ॥ वेदेष्वपि वदन्तीमं मन्त्र-ग्रामं द्विजातयः । जातकर्मणि पुत्राणां तवापि विदितं तथा ॥ ६१ ॥ अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ ६२ ॥ जीवितं त्वदधीनं मे सन्तानमपि चाक्षयम् । तस्मात्त्वं जीव मे पुत्र सुसुखी शरदां शतम् ॥ ६३ ॥ त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात् पुरुषोऽपरः ।

